धानतापादनं तत्त्वम् । अभ्यासेऽप्यसमर्थस्सन्मत्कर्मपरमो भव इत्यादि । देहपाते स्वैकघनैव शिवतेति तदा समावेशादिव्यवहारो न कश्चिदिति ।

पृष्ठ १३५.

१. शून्यप्रमातुरेव वक्तव्यदीपमाचष्टाणो द्वितीयसुषुप्तस्य भूमिकां करोति साधारणामान्तरीति सूत्रेण । एष शून्यः प्रमाताहन्तारूपया कर्तृतयाभिषिक्तो विद्याकलाशक्तिप्रपञ्चरूपस्य बुद्धिकर्मेन्द्रियवर्गस्य बाह्यविषयालोचनविषयनिर्माणलक्षणातो बाह्यवृत्तेः प्रत्येकमसाधारणरूपायाः विलक्षणा याऽसौ आन्तरी वृत्तिर्यया वायुरेकः प्राणनापाननादिक्रियापञ्चकप्रपञ्चितः पञ्चात्मकतामभ्येति । तां वृत्तिं जीवनलक्षणां तस्याक्षवर्गस्य जडस्य यतः करणवर्गोयमिति न्यायेन स्वावेशवशादुत्थापयञ्जीव इत्युच्यते । सा तथाभूता या वृत्तिस्तस्य शून्यस्य तथोत्थापिका सा जीवनक्रिया । इन्द्रियशक्तीनामेव वा या आन्तरी साधारणरूपा प्राणनादिक्रियोत्थापिका वृत्तिः सा परमार्थतः कर्तुरेव वृत्तिर्न जडानामिति एतदेव जीवनम् । यदा तु प्राण एवाहन्ता तदाप्येवम् । तदा तु प्राण एव जीवः तत्रैवाऽहन्ताऽऽवेशात् ।

२. एवं शून्ये एवाहन्ता अक्षचक्रोपोद्बलिका जीवनम् इति स शून्य एव जीवः संसरति । यदि वेन्द्रियशक्तीनामेव यान्तरी साधारणप्राणनात्मिका प्राणशब्दवाच्या प्राणादिमारुतविक्षेपप्रेरणामयी सैव अहम् इत्यधिशयाना जीवनम् । तदा प्राण एव जीवः संसारी स एव शून्यः ।

पृष्ठ १३६.

१. प्राण इति व्याख्यातुं या वृत्तिरान्तरे वा स्पर्श इति तां व्याचष्टे प्राणस्येति, स्पर्श इति, स्पर्शेन्द्रियगम्ये इत्याशयः, अन्यथा देहे चक्षुरादिगम्ये बुद्धिवृत्तौ चान्तःकरणगम्यायामस्त्वहन्ताभिमानः, आन्तरे पुनर्वायौ केनाधिगतस्तथाभिमान इति शङ्क्येत, शरीरस्य च विषयीभूतस्य सत्यां भोगं प्रत्याधारतायामहमिति भोक्तृत्वमारोपितम्, बुद्धेस्तु सत्यां भोगं प्रति करणतायाम्, तद्वदेवान्तरस्य स्पर्शस्य करणतायामेव सत्यां भोक्तृत्वमारोपितमिति निरूपयति न चात्रेति । अक्षिशूलं हि वायुना अश्मनोऽभिघातजनितस्तीव्रतमस्पर्शो दुःखवेदनादायी, येन तत्र करणतास्पर्शः वायौ, आन्तरत्वमिति अवाह्यत्वम्, यावदिति अन्तरङ्गत्वादप्यान्तरत्वमित्याशयः । सर्वाणीन्द्रियाधिष्ठानानि व्याप्नोति तत एव त्वगेवैकमिन्द्रियमव्यतिरेकादिति मन्यन्ते, ततोऽयं प्राणस्सर्वतो देहादेरुत्कृष्टः सकलकरणमार्गाधिष्ठानात् । अत एवेति । अहमिति यतः प्रमातृरसेनायमभिषिक्तस्ततो हेतोरान्तरो वायुर्नासिकाभ्यां प्रवेशनिस्स-

रणधर्मा यः स एव न (?) प्राण इत्युच्यते। अपितु तत्राधिकं रूपमस्तीत्यपि शब्दः। जीवतीत्येवं जीवनशब्दवाच्यो यत्प्रमातुरर्थस्य सतो व्यापारात्मा सा प्राणनक्रिया लक्षणोक्ता प्राणाख्ये प्रमातर्यस्ति। कीदृश्यसौ क्रिया, आह, सर्वाभिरिन्द्रियशक्तिभिरनुस्यूतं यत्पुर्यष्टकं तस्य सम्बन्धिनी, अत्र च विशेष्य-द्वारेण विशेषणं बोद्धव्यम्। तस्य अनुवेधकत्वेन वर्तमानानामिन्द्रियशक्तीनां सम्बन्धिनी आन्तरी यासौ वृत्तिः सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चेति निरूपिता सा यस्मिन्प्रकृता फलत्वेन प्रस्तुता। अत एवेति। यत एवं-रूपोऽसौ व्यापारस्तत आन्तरत्वं सर्वानुवेधकत्वमप्यभिमतम्। यतः प्रमातुः शक्तिरूपाणि यानीन्द्रियाणि प्रमाकरणानि यद्योगात्प्रमाता, तेषां या भूमि-रन्तर्मुखरूपं तत्रावस्थितोऽसौ व्यापारस्तेनाबहीरूपत्वादन्तरङ्गत्वात्सर्वानु-वेधकत्वाच्चान्तरत्वं प्राणस्येति तात्पर्यम्।

१. प्राणपुटे तु स्पर्शीकृतस्य सुखदुःखादेर्भावात् मायाख्यमस्ति मलम् इति सवेद्यं तत्।

पृष्ठ १३८.

१. वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।
वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः॥

पृष्ठ १३९.

१. रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात्।
नानुकार्यस्य वृत्तत्वात्काव्यस्यातत्परत्वतः॥

२. स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः।
विकाशविस्तरक्षोभविक्षेपैः स चतुर्विधः॥
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात्।

३. यद्वा विभावादिचर्वणामहिम्ना सहृदयस्य निजसहृदयतावशोन्मिषितेन तत्तत्स्थाय्युपहितस्वस्वरूपानन्दाकारा समाधाविव योगिनश्चित्तवृत्तिरुपजा-यते, तन्मयीभवनमिति यावत्। आनन्दो ह्ययं न लौकिकसुखान्तरसाधा-रणः, अनन्तःकरणवृत्तिरूपत्वात्। इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वा-रस्येन भग्नावरणचिद्विशिष्टो रत्यादिः स्थायी भावो रस इति स्थितम्। वस्तु-तस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः। सर्वथैव चास्य विशिष्टात्मनो विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वं स्वप्रकाशत्वं च सिद्धम्। रत्याद्यंशमादाय त्वनित्यत्वमितरभास्यत्वं च। चर्वणा चास्य चिद्गतावरणभङ्ग एव प्रागुक्ता, तदाकारान्तःकरणवृत्तिर्वा।

'' इयं च परमब्रह्मास्वादात्समाधेर्विलक्षणा, विभावादिविषयसंवलितचिदानन्दालम्बनत्वात् ।

पृष्ट १४०.

१. स्वप्रकाशमात्ररूपमेव आत्मतत्त्वं सांख्यानाम् । सौगतानां तु स्वप्रकाशत्वेन अन्तर्मुखं बाह्यनीलादिप्रकाशत्वेन च बहिर्मुखम् । न च एकस्य अन्तर्बहिर्मुखता उपपन्ना, स्वपरयोरैक्यापत्तिप्रसङ्गात् । न च सा युज्यते, ग्राह्यस्य अर्थस्य ग्राहकात् विच्छेदेन अवभासादिति ग्राहकोऽन्तर्मुख एव । अत एव बाह्यत्वग्राह्यत्वायोगात् न तेन तुल्यकक्ष्यतया परं किञ्चन चकास्ति । तुल्यकक्ष्यताप्रतिभासकृतश्च गुणभावप्रधानभावाभ्यां धर्मधर्मिभावविशेषणविशेष्यभावोपधानोपधेयभावादिव्यवहारः । तथा च पटोऽयं शुक्ल इति पटाभासशुक्लाभासयोर्बहिर्भूमौ तुल्येदन्ताग्राह्यभावेन स्थितयोः पटाभासोपरक्तः शुक्लाभासो विपर्ययो वा भवतीति युज्यते । तेन अत्र गुणभूतो विशेषणमस्योपधेयरूपत्वात्, अन्यत् स्वरूपव्यतिरिक्तमुपधेयं स्वात्मना अनुरञ्जनीयं रूपं विशिष्टलक्षणं येनेति, प्रधानभूतस्तु विशेष्योऽन्येन उपधेयं विशेषणेन उपरञ्जनीयं रूपमस्येति । एवं च विशेषणविशेष्यभावमुखेन यो व्यवहारः स आत्मनि न उपपद्यते इति न असौ कस्यचित् धर्मः, नापि तस्य कश्चित् धर्म इति । ज्ञानं नाम यद्यपि बुद्धिरूपं तथापि न आत्मनो धर्म इति नैयायिकादितो भेदः ।

पृष्ट १४१.

१. तथा च मधुरादौ रसे औदरिकाभ्यवहारवैलक्षण्येन प्रवृत्त इदमित्थमिति प्रमातरि विश्रमयन्प्रमातृभागमेव प्रधानतया विमृशन्भुञ्जान इत्युच्यते । यत्राप्यत्यन्तम् अन्यथाभावमतिक्रम्य सुखमास्वाद्यते अर्जनादिसम्भाव्यमानविघ्नान्तरनिरासाद्वैषयिकानन्दविलक्षणशृङ्गारादौ नाट्यकाव्यादिविषये, तत्र वीतविघ्नत्वादेवासौ रसना चर्वणा निर्वृतिः प्रतीतिः प्रमातृताविश्रान्तिरेव, तत एव हृदयेन परामर्शलक्षणेन प्राधान्याद् व्यपदेश्या, व्यवस्थितस्यापि प्रकाशभागस्य वेद्यविश्रान्तस्याऽनादरणात् सहृदयतोच्यते इति । निर्विघ्नास्वादरूपा च रसना । तद्गोचरीकार्याः चित्तवृत्तयो रसा न वेत्ययमर्थोऽभिनवभारत्यां नाट्यवेदविवृतौ वितत्य व्युत्पादितोऽस्माभिरिति तत्कुतूहली तामेवावलोकयेदिह तु प्रकृतविघ्नकारित्वान्न विततः । तस्मादनुपचरितस्य संवेदनरूपतानान्तरीयत्वेनाऽवस्थितस्य स्वतन्त्रस्यैव रसनैकघनतया परामर्शः परमानन्दो निर्वृतिश्चमत्कार उच्यते, तस्माद्युक्तमाह चमत्कृतेरभावात् । मधुरादिरसास्वादे तु

विषयस्पर्शव्यवधानम् , ततोऽपि काव्यनाट्यादौ तद्व्यवधानशून्यता, तद्व्यवधानसंस्कारानुवेधस्तु तत्रापि । परन्तु तथोचितव्यवधानांऽशतिरस्क्रियासावधानहृदया लभन्ते एव परमानन्दम् ।

पृष्ठ १४३.

१. स्थायिविलक्षणो रसः, न तु यथा शङ्कुकादिभिरभ्यधीयत 'स्थाय्येव विभावादिप्रत्याय्यो रस्यमानत्वाद्रस उच्यते' इति, एवं हि लौकिकेऽपि किं न रसः, असतोऽपि हि यत्र रसनीयता स्यात्तत्र वस्तुसतः कथं न भविष्यति । तेन स्थायिप्रतीतिरनुमितिरूपा वाच्या न रसः । अत एव सूत्रे स्थायिग्रहणं न कृतम् , तत्प्रत्युत शल्यभूतं स्यात् । केवलमौचित्यादेवमुच्यते स्थायी रसीभूत इति ।

पृष्ठ १४४.

१. यस्य वशात् सामर्थ्यात् वस्तु नीलसुखादिकं व्यवतिष्ठते, नियतां प्रकाशमर्यादां न अतिवर्तते, इदमिति स्वरूपेण एतादृक् इति च विशेषणभूतनित्यानित्यत्वादिधर्मान्तरयोगेन तल्लोके प्रमाणम् इति स्थितम् ।

२. तेन शून्यधीप्राणदेहाद्युपाध्याश्रयस्वीकारात्मसङ्कोचपरिग्रहसङ्कुचितात् मायाप्रमातुः अनन्तकालान्तर्मुखसंवेदनरूपात् स प्रमाणाभिमत आभासो यावत् प्रमेयोन्मुखतास्वभावः तावत् प्रमेयस्य देशकालाकाराभाससम्भेदवत्त्वात् सोपि तथैव क्षणे क्षणे अन्यान्याभासरूपः सृष्टिशक्त्या स्रष्टव्यः, तदुक्तम् अभिनवोदयः इति ।

३. कासौ प्रमा, फलस्वभावा इति चेत्, आह, स एव बोधरूप आभासो मितिः प्रमाणफलम् इति सम्बन्धः । ननु एवं पर्यायत्वमुक्तं भवेत् नतु फलस्वरूपम्, आह, बाह्योन्मुखतया प्रकाशरूपतया तत्र तत्प्रमाणम् । या तु तस्यैव अन्तर्मुखात्मा विमर्शरूपता प्राक् उपपादिता तत्स्वभावेन केवलं विषयदशासङ्कुचितेन स एव बोधः फलम् ।

पृष्ठ १४५.

१. इदम् इति विमर्शबलेन च यतः प्रमाणम् , विमर्शश्च शब्दजीवितः, शब्दश्च आभासान्तरैः देशकालादिरूपैरनामृष्टे सामान्यरूपे इदम् इति निर्विकल्पके ज्ञाने एकत्रैव आभासमात्रे प्रवर्तते घट इति लोहित इति, ततो देशकालाभासयोः स्वलक्षणस्वार्पणप्रवणयोः अनामिश्रणात् सामान्यायमाने आभासे प्रमाणं प्रवर्तते, अयम् इत्यपि हि आभास आभासान्तरानामिश्रे पुरोवस्थितात्मभासमात्रे इति उक्तं श्रीमदाचार्यपादैरेव ।

२. स्वलक्षणं तु तदाभाससामानाधिकरण्याभासरूपम् आभासान्तरम् एकम् अन्यदेव, तत्र च पृथगेव च प्रमाणम्, तत्परं मिश्रीकारेषु तेषु आभासेषु गृहीतग्राहि न प्रमाणम् इति अग्रे भविष्यति, अध्यवसायस्य अस्मदुक्तनयेन शब्दप्राणितस्य प्रत्याभासविश्रान्तौ तदपेक्षमपि प्रामाण्यं वदता प्रत्याभासनिष्ठमेव प्रामाण्यमुपेत्यम्, इत्यास्ताम्, किमवान्तरेण।

पृष्ठ १४६.

१. सिद्धान्तिदर्शने तावदनन्त आभासवर्गो नियतिशक्त्या मिश्रीभूतः सन् पदार्थेऽर्थक्रियाकारी, तस्य रुचितेन अंशेन व्यपदेशो भवति।

२. यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधिते॥
यद्यपि घट इति बहिः परिदृष्ट एकोऽर्थः, तथापि तावनेव असौ न, अपि तु पृथक् निर्भज्यमानतामपि सहते। तथाहि स्वतन्त्रं वा विवेचनम् अर्थित्वानुसारेण वा पूर्वप्रसिद्ध्युपजीवनेन वा। तत्र त्रिधापि विवेचने क्रियमाणे पृथगेव भान्ति आभासाः।

३. यद्यप्यनेकाभासयोग उक्तस्तथापि न पूर्णता स्वलक्षणस्येति तस्यापीत्यपि शब्दः, ततश्चान्यदपि देशकालाभासरूपं तत्र योज्यमिति द्वितीयोऽपि शब्दः, तद्योजनं विना तु न पूर्णता, तद्योजने स्वन्यायोजनेऽपि पूर्णता स्वलक्षणस्येत्याह—देशकालभेदादेवेति।

४. येन विमर्शसामर्थ्येन सा एवंभूता भवति पृथ्वादिना या सन्निवेशमात्रे मृन्मयत्वराजतत्वाद्यनपेक्षिणि व्यवहृता, कीदृशीभवति, आह, अन्यैराभासैर्मृन्मयो लोहित उन्नत इत्यादिभिर्विशिष्टैरेकरूपे विशेष्यरूपत्वादेव केवलसन्निवेशसामान्याभासाद्विलक्षणाभासेऽपि भवन्ती पूर्वप्रतिपन्नात् सामान्यात् सन्निवेशमात्राकारादभिन्ना, एवं मृन्मयता। एतदन्यत्रातिदिशति एवम् इति। महत्त्वादि यदेकैकमनामिश्रमनेकं सामान्यं तद्विषयत्वेन ये निश्चिताः परामर्शास्ते पुनरेकस्मिन्स्वलक्षणे प्रवर्तमानास्तं सामान्यात्मानं विशेषीभूतमपि पूर्वं सामान्यप्रतिपत्तिव्यवहारकाले प्रतिपन्नेन विविक्तेनाऽन्यामिश्रेण बहुसंख्याकेन तदेकपरामर्शविषयेण सामान्येनैकतां नयन्ति। (१०८ पृष्ठे)

पृष्ठ १४८.

१. इत्येवं तत्र आभासानां भेदः, एकस्वलक्षणन्तु एकस्मिन्देशाभासे कालाभासे च विश्रान्तेः। देशकालाभासावेव हि सामान्यरूपताप्रयोजकव्याप्तित्वनिष्पादखण्डनाविधानम्बिधवृत्ती विशेषरूपतां वितरतः।

२.—गुण्यते आरोप्यते ह्यतादिधर्मेण साधर्म्यादिति गुणः आरोप्यमाणः, यत्र आरोप्यते स गुणी । ततः औपचारिकमेवमादि सामानाधिकरण्यमिति उक्तं भवति ।

पृष्ठ १५२.

१. साधारणोऽन्यथा चैशः सर्गः स्पष्टावभासनात् ।
विकल्पहानेनैकाग्रयात् क्रमेणेश्वरतापदम् ॥

ऐश्वरः सर्गो द्विधा, साधारणश्च घटादिरसाधारणश्च अन्यथावृत्तिनिर्दिष्टो द्विचन्द्रादिः, तस्य च सामान्यलक्षणं स्पष्टावभासनं नाम । सोऽयं सर्गो यदा विकल्पहानक्रमेण तस्मिन्निर्विकल्पकपरिगृहीत एव स्पष्टाभेऽर्थे एकाग्रत्वमवलम्ब्य अहमिदम् इत्यैश्वर्यपरामर्शपदं भवति तदा अन्तर्लक्ष्यबहिर्दृष्टिनिमेषोन्मेषपरिहारोपदेशदिशा क्रमेण अभ्यासतारतम्येन पशोः पशुत्वं प्रतिहन्तीश्वरत्वं च दर्शयति ।

पृष्ठ १५३.

१. वाग्धेनुर्दुग्ध एकं हि रसं यद्बाभ ( यद्बाल ? ) तृष्णया ।
तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः ॥
तदावेशेन विनाप्याक्रान्त्या हि योगिभिर्दुह्यते ।

पृष्ठ १५४.

१. तत्र च नटो ध्यायिनामिदंध्यानपदः । न हि तत्रायमेव सिन्दूरादिमयो वासुदेव इति स्मरणीयप्रतिपत्तिः, अपि तु तदुपायद्वारेणातिस्फुटीभूतसङ्कल्पगोचरो देवताविशेषो ध्यायिनां फलकृत्, तद्वन्नट्यक्रिया ।

पृष्ठ १५७.

१. नाट्यं नाम लौकिकपदार्थव्यतिरिक्तं तदनुकारप्रतिबिम्बालेख्यसादृश्यारोपाध्यवसायोत्प्रेक्षास्वप्नमायेन्द्रजालादिविलक्षणं तद्ग्राहकस्य सम्यग्ज्ञानभ्रान्तिसंशयानवधारणाऽनध्यवसायविज्ञानभिन्नवृत्तान्तास्वादनरूपसंवेदनसंवेद्यं वस्तु रसस्वभावमिति वक्ष्यामः ।

पृष्ठ १६२.

१. एकेनैव च रूपाद्यन्यतमेन उद्रिक्तप्राक्तनबलोपबृंहितस्य सर्वविषयकरणीयोक्तक्षोभकरणसमर्थत्वम् । ················तथा च तद्वीर्यानुपबृंहितानाम् अविद्यमानतथाविधवीर्यविक्षोभात्मकमदनानन्दानां पाषाणानामिव रमणीयतरतरुणीरूपमपि नितम्बिनीवदनघूर्णमानकाकलीकलगीतमपि न पूर्णानन्दपर्यवसायि । यथा यथा च न बृंहकं भवति तथा तथा परिमितचम-

-त्कारपर्यवसानम् । सर्वतो हि अचमत्कारे जडतैव । अधिकचमत्कारावेश एव वीर्यक्षोभात्मा सहृदयता उच्यते ।

पृष्ठ १६३.

१. येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवन-योग्यता ते हृदयसंवादभाजः सहृदयाः । यथोक्तम्:—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥

इति ।

पृष्ठ १६४.

१. *प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा, तस्या विशेषो रसावेशवैशद्यसौन्दर्यं* काव्यनिर्माणक्षमत्वम् ।

अथ च

प्रतिभाविशेषोऽनन्तजन्माभ्यासमूलः ।

२. काव्यतत्त्वभूतो योऽर्थस्तस्य भावना वाच्यातिरेकेणानवरतचर्वणा ।

पृष्ठ १६७.

१. नाट्ये तु पारमार्थिकं किञ्चिदद्य मे कृत्यं भविष्यतीत्येवंभूताभिसन्धिसंस्काराभावात्सर्वपरिषत्साधारणप्रमोदसारापर्यन्तविरसनादरणीयत्लोकोत्तरदर्शनश्रवणयोगी भविष्यामीत्यभिसन्धिसंस्कारादुचितगीतातोद्यचर्वणाविस्मृतसांसारिकभावतया विमलमुकुरकल्पीभूतनिजहृदयः सूत्राद्यभिनयावलोकनोज्झितप्रमोदशोकादितन्मयीभावः पाठ्याकर्णनपात्रान्तरप्रवेशवशात् समुत्पन्ने देशकालविशेषावेशानालिङ्गिनि सम्यङ्मिथ्यासंशयसम्भावनादिज्ञानविलक्षणपरामर्शानास्पदे रामरावणादिविषयाध्यवसाये ।

पृष्ठ १७२.

१. यथा हि रात्रिमासत तामग्नौ प्रादादित्यादावर्थितादिलक्षितस्याधिकारिणः प्रतिपत्तिमात्रादतितीव्रप्ररोचिरादनन्तरमधिकेनोपात्तकालतिरस्कारेणासते प्रददातीत्यादिरूपा संक्रमणादिस्वभावा यथादर्शनं प्रतीति–भावना–विधि–नियोगादिभाषादिभिर्व्यवहृता प्रतिपत्तिः, तथैव काव्यात्मकादपि शब्दात् अधिकारिणोऽधिकास्ति प्रतिपत्तिः । अधिकारी चात्र विमलप्रतिभानशालिहृदयः ।

पृष्ठ १७४.

१. किं नु लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिप-

धमान एव न ताटस्थ्येन प्रतिपद्यते, अपि तु हृदयसंवादापरपर्यायसहृदयत्वपरवशीकृततया पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया ।

पृष्ठ १७७.

१. वर्तमानतयैव विशेषाणां सम्भाव्यमानार्थक्रियासामर्थ्यात्मकसालक्षण्यपर्यवसानात् । न च तेषां वर्तमानत्वेऽपगता तावद्विशेषबुद्धिः ।

२. 'ग्रीवाभङ्गाभिरामम्' इत्यादिवाक्येभ्यो वाक्यार्थप्रतिपत्तेरनन्तरं मानसी साक्षात्कारात्मिकाऽपहसिततत्तद्वाक्योपात्तकालादिविभागा तावत्प्रतीतिरुपजायते । तस्यां यो मृगपोतकादिर्भाति तस्य विशेषरूपत्वाभावाद् भीत इति त्रासकस्यापारमार्थिकत्वाद् भयम् एव परं देशकालाद्यनालिङ्गितम् तत एव……निर्विघ्नप्रतीतिग्राह्यम् साक्षादिव हृदये निविशमानं चक्षुषोरिव विपरिवर्तमानं भयानको रसः ।

३. रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वम्
भावस्थिराणि जननान्तरसौहृदानि ॥ ( शाकु० ५ )
इत्यादि । अत्र हि स्मरतीति या स्मृतिरुपदर्शिता सा न तार्किकप्रसिद्धा, पूर्वमेतस्यार्थस्याननुभूतत्वात् । अपि तु प्रतिभानापरपर्यायसाक्षात्कारस्वभावेयमिति ।

पृष्ठ १७८.

१. विघ्नाश्चास्यां सप्त । प्रतिपत्तावयोग्यता संभावनाविरहो नाम १ । स्वगतत्वपरगतत्वनियमेन देशकालविशेषावेशः २–३ । निजसुखादिविवशीभावः ४ । प्रतीत्युपायवैकल्यस्फुटत्वाभावः ५ । अप्रधानता ६ । संशययोगश्च ७ ।
तथाहि संवेद्यमसंभावयमानः संवेद्ये संविदं विनिवेशयितुमेव न शक्नोति का तत्र विश्रान्तिरिति प्रथमो विघ्नः। तदपसारणे हृदयसंवादी लोकसामान्यवस्तुविषयः, अलोकसामान्येषु तु चेष्टितेषु अखण्डितप्रसिद्धिजनितगाढारूढप्रत्ययप्रसरकारी प्रख्यातरामादिनामधेयपरिग्रहः । अतएव नित्यसामान्योत्कर्षोपदेशव्युत्पत्तिप्रयोजने नाटकादौ प्रख्यातवस्तुविषयत्वादि नियमेन निरूप्यते, न तु प्रहसनादौ । तच्च स्वावसर एव वक्ष्याम इत्यास्तां तावत् । १ ।
स्वैकगतानां च सुखदुःखसंविदामास्वादे यथासम्भवं तदपगमभीरुतया वा तत्परिरक्षाव्यग्रतया वा तत्सदृशजिगीषया वा तज्जिहासया वा तत्प्रचि-

स्थापयिषया वा तद्गोपनेच्छया वा प्रकारान्तरेण वा संवेदनान्तरसमुद्गम एव परमो विघ्नः । २ ।

परगतत्वनियमभाजामपि सुखदुःखानां संवेदने नियमेन स्वात्मनि सुखदुःखमोहमाध्यस्थ्यादिसंविदन्तरोद्गमनसंभावनादवश्यंभावी विघ्नः । तदपसारणे कार्यो नातिप्रसङ्गोऽत्रेत्यादिना पूर्वरङ्गविधिं प्रतीतिपूर्वरङ्गानिगूहनेन नटी विदूषको वाऽपीति ल्लित्तप्रस्तावनावलोकनेन च यो नटरूपताधिगमस्तत्पुरस्सरः प्रतिशीर्षकादिना तत्प्रच्छादनप्रकारोऽभ्युपायः अलौकिकभाषादिभेदलास्याङ्गरङ्गपीठमण्डपगतकक्ष्यादिपरिग्रहनाट्यधर्मसहितः । तस्मिन् हि मत्यस्यैवात्रैवैतह्येव च सुखं दुःखं वेति न भवति, प्रतीतिस्वरूपस्य निह्नवाद्रूपान्तरस्य चारोपितस्य प्रतिभासंविद्विश्रान्तिवैकल्येन स्वरूपे विश्रान्त्यभावात् सत्यतदीयरूपनिह्नवमात्र एव पर्यवसानात् । तथा हि आसीनपाठ्यपुष्पगन्धिकादि लोके न दृष्टम् । न च तत्र किञ्चित्, कथञ्चित् संभाव्यत्वादिति स एष सर्वो मुनिना साधारणीभावसिद्ध्या रसचर्वणोपयोगित्वेन परिकरबन्धः समाश्रितः इति तत्रैव स्फुटीभविष्यतीति तदिह तावन्नोद्यमनीयम्, ततः स एष स्वपरनियततापिघ्नापसारणप्रकारो व्याख्यातः । ३ ।

निजसुखादिविवशीभूतश्च कथं वस्त्वन्तरे संविदं विश्रामयेदिति तत्प्रत्यूहव्यपोहनाय प्रतिपदार्थनिष्ठैः साधारण्यमहिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयैरातोद्यगानविचित्रमण्डपपदविदग्धगणिकादिभिरुपरञ्जनं समाश्रितम्, येनाहृदयोऽपि हृदयवैमल्यप्राप्त्या सहृदयीक्रियते । उक्तं हि दृश्यं श्रव्यं चेति । ४ ।

किञ्च प्रतीत्युपायानामभावे कथं प्रतीतिभावः । अस्फुटप्रतीतिकारिशब्दलिङ्गसम्भवेऽपि न प्रतीतिर्विश्राम्यति, स्फुटप्रतीतिरूपप्रत्यक्षोचितप्रत्ययसाकाङ्क्षत्वात् । यथाहुः सर्वा चेयं प्रमितिः प्रत्यक्षपरेति । स्वसाक्षात्कृते आगमानुमानशतैरप्यनन्यथाभावस्य स्वसंवेदनात् । अलातचक्रादौ साक्षात्कारान्तरेणैव बलवता तत्प्रमित्यवधारणादिति लौकिकस्तावदयं क्रमः । तस्मात्तदुभयविघ्नविघातेऽभिनया बोधकधर्मिवृत्तिप्रवृत्त्युपस्कृताः समभिषिच्यन्ते । अभिनयनं हि सशब्दलिङ्गव्यापारविसदृशमेव प्रत्यक्षव्यापारकल्पमिति निश्चेष्यामः । ५ ।

अप्रधाने च वस्तुनि न कस्यचित् संविद्विश्राम्यति । तस्यैव प्रत्ययस्य प्रधानान्तरं प्रत्यनुधावतः स्वात्मनि अविश्रान्तत्वात् । अतोऽप्रधानत्वं जडे विभावानुभाववर्गे व्यभिचारिनिचये च संविदात्मकेऽपि नियमेनान्यमुख-

प्रेक्षिणि संभवतीति तदतिरिक्तः स्थाय्येव तथा चर्वणापात्रम् । तत्र पुरुषार्थनिष्ठाः काश्चित्संविद इति प्रधानम् । ६ ।

तत्रानुभावानां विभावानां व्यभिचारिणां च पृथक् स्थायिनि नियमो नास्ति, वाष्पादेरानन्दाचिरोगादिजत्वदर्शनात्, व्याघ्रादेश्च क्रोधभयादिहेतुत्वात्, श्रमचिन्तादेरुत्साहभयाद्यनेकसहचरत्वावलोकनात् । सामग्री तु न व्यभिचारिणी । तथाहि बन्धुविनाशो यत्र विभावः परिदेविताश्रुपातादिस्त्वनुभावः चिन्तादैन्यादिर्व्यभिचारी सोऽवश्यं शोक एवेत्येवं संशयोदये शङ्कात्मकविघ्नशमनाय संयोग उपात्तः । ७ ।

पृष्ठ १८२.

१. योगिप्रत्यक्षजतटस्थपरसंवित्तिज्ञानात् सकलवैषयिकोपरागशून्यशुद्धपरयोगिगतस्वानन्दैकघनानुभवाच्च विशिष्यते । एतेषां यथायोगमर्जनादिविघ्नान्तरोदयात्ताटस्थ्यस्फुटत्वविषयावेशवैवश्येन च सौन्दर्यविरहात् ।

२. प्रत्ययस्य परिचित्तज्ञानम् ।

पृष्ठ १८३.

१. न च सालम्बनं तस्याविषयीभूतत्वात् ।

२. स्थायिविलक्षण एव रसः ।

पृष्ठ १८४.

१. अतएव परकीया न चित्तवृत्तिर्गम्यत इत्यभिप्रायेण 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रे स्थायिग्रहणं न कृतम् ।
तत्प्रत्युत शल्यभूतं स्यात् ।

२. विभावानुभावयुक्तो ह्यङ्गवस्तुसमाश्रयः ।
सञ्चारिभिस्तु संयुक्तः स्थाय्येव तु रसो भवेत् ॥

३. यथाहि गुडादिभिर्द्रव्यैर्व्यञ्जनौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति ।

पृष्ठ १८५.

१. केवलमौचित्यादेवमुच्यते स्थायी रसीभूत इति । औचित्यन्तु तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणोपयोगितया विभावादित्वावलम्बनात् ।

२. नाट्यात्समुदायरूपाद्रसाः यदि वा नाट्यमेव रसाः, रससमुदायो हि नाट्यम् । न नाट्य एव च रसाः, काव्येऽपि नाट्यायमान एव रसः, काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदय इत्युपाध्यायाः ।

पृष्ठ १८६.

१. वयन्तु ब्रूमः 'काव्यन्तावन्मुख्यतो दशरूपात्मकमेव। तत्र ह्युचितैर्भाषावृत्ति-काकुनेपथ्यप्रभृतिभिः पूर्यते च रसवत्ता। सर्गबन्धादौ हि नायिकाया अपि संस्कृतैवोक्तिरित्यादि बहुतरमनुचितम्, केवलं शक्तिरहितत्वाद् व्यावर्ण्यते तावतैव हृद्यमिति न्यायेनौचित्यं न प्रतिहारि। तत एवोच्यते सन्दर्भेषु दशरूपकमिति।

पृष्ठ १८७.

१. तद्विचित्रं चित्रपटवद्विशेषसाकल्यादिति (२-३०-१२) तद्रससमर्पणया तु प्रबन्धे भाषावेषप्रवृत्त्यौचित्यादिकल्पनात्, तदुपजीवनेन मुक्तके।...... तेन ये काव्याभ्यासप्राक्तनपुण्यादिहेतुबलादतिसहृदयास्तेषां परिमितविभावा-द्युन्मीलनेन परिस्फुट एव साक्षात्कारकल्पः (कल्पनः?) काव्यार्थः स्फुरति, अतएव तेषां काव्यमेव प्रतीत्युत्पत्तिकृत्, अनपेक्षितनाट्यमपि। तेषामपि तु 'नाट्यनिपतिताः स्फुरिताः शशिरश्मयः' इति न्यायेन सुतरां निर्मली-करणम्।

*(अयं ग्रन्थः २८८ पृष्ठे समुपलभ्यते)*

पृष्ठ १८८.

१. तेनानन्त्येऽपि पार्षदप्रसिद्ध्यैतावतां प्रयोज्यत्वमिति यद् भट्टलोल्लटेनाभिहितं तदवलेपना परामृश्येत्यलम्।

पृष्ठ १८९.

१. एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान्विकारानम्भो यथा सलिलमेव तु तत्समग्रम्॥

२. ग्रस्तैकहायनकुरङ्गविलोलदृष्टेरस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥

पृष्ठ १९०

१. वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरिदानीन्तु विरहः॥

पृष्ठ १९१.

१. परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी॥

२. तटस्थं नैराश्यादपि च कलुषं विप्रियवशात्
वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव।

प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणम्
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥

१. यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसञ्च किञ्चिदुपनिबद्धम्, तत्र कार्यगौरवादवधातव्यम् ।

पृष्ठ १९२.

१. ननु वात्सल्यं लौल्यं भक्तिः कार्पण्यं वा कथं न रसः, आर्द्रताऽभिलाषश्रद्धास्पृहाणां स्थायिभावानां तत्र सत्त्वादिति चेन्न, तेषां व्यभिचारित्वात्मकत्वात् । ननु कस्य रसस्य ते व्यभिचारिणो भवेयुरिति चेत्सत्यम्, वात्सल्ये करुण एव रसो लौल्ये हास्यो भक्तौ शान्तः कार्पण्ये हास्य एव ।

पृष्ठ १९३.

१. लक्षणं च प्रवृद्धमिथ्याज्ञानवासनामाधारसो मिथ्याज्ञानमस्य स्थायिभावः । विभावाः सांसारिका भोगार्जकधर्माधर्माः । अनुभावाः पुत्रकलत्रविजयसाम्राज्यादयः ······· नाव्यभिन्ने परं निर्वेदस्यायिभावकः शान्तोऽपि नवमो रसो भवतीति ।

२. शृङ्गारवीरकरुणाद्भुतरौद्रहास्य–बीभत्सवत्सलभयानकशान्तनाम्नः ।
आम्नासिषुर्दशरसान्सुधियो वयं तु शृङ्गारमेव रसनाद्रसमामनामः ॥

३. शृङ्गारवीरकरुणरौद्राद्भुतभयानकाः ।
बीभत्सहास्यप्रेयांसः शान्तोदात्तोद्धता रसाः ॥

४. स्नेहस्थायिभावो ········प्रेयानिति प्रतीयते । धृतिस्थायिभावो ·········· शान्त इत्यभिधीयते । अन्ये पुनरस्य शमं प्रकृतिमामनन्ति । स तु धृतेरेव विशेषो भवति । तत्त्वाभिनिवेशिनी मतिः·······उदात्तरसरूपेण निष्पद्यते । गर्वप्रकृतिरुद्धतो नाम रसः ।

पृष्ठ १९४.

१. रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते ।
योऽर्थ स्तस्यान्वयात्काव्यं कमनीयत्वमश्नुते ॥

२. तात्पर्यमेव वचसि ध्वनिरेव काव्ये सौभाग्यमेव गुणसम्पदि वल्लभस्य ।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः शृङ्गार एव हृदि मानवतो जनस्य ॥
वीराद्भुतादिषु च येह रसप्रसिद्धिः सिद्धा कुतोऽपि वटयक्षवदिवावभाति ।
लोके गतानुगतिकत्ववशादुपेतामेतां निवर्तयितुमेष परिश्रमो नः ॥

पृष्ठ १९५.

१. स्थास्त्रिविधोऽहङ्कारो जीवनसंरम्भगर्वरूपोऽयम् ।
सम्भेदादस्य सतो विषयो व्यवहार्यतामेति ॥

आहङ्कारिको हि प्रयत्नात्मकः संरम्भः । यदुक्तम् 'संरम्भोऽहंकृतेर्वृत्तिः' इति किञ्च प्राणादिवायुप्रवृत्तिहेतुत्वेन जीवनमपि तद्धेतुकमेव । यदुक्तम् 'संरम्भा-स्य चेष्टन्ते शारीराः पञ्च वायवः' इति । तथा गर्वोऽपि प्राह्याध्यवसायाद् बुद्धिकार्याद्भिन्नोऽहमिति प्राहकाध्यवसायोऽपि तत्कार्यमेव, अत एतैस्त्रिभि-रहङ्कारसिद्धिः । ततश्चैतत्सम्बन्धादेव घटमहं जानामीति व्यवहारः ।

२. प्रकाशप्रवृत्तिनियमात्मिकास्तिस्र इति प्राधान्यादुक्तम्, अन्यासामपि गुणवृत्तीनां स्थैर्यधैर्यादीनां सम्भवात् । तदुक्तं मतङ्गे—

स्थैर्यं धैर्यं तथा दाक्ष्यं मार्दवं ऋजुता तथा ।
सन्तोष आर्जवं शौचं व्यवसायस्तथा स्मृतिः ॥
..................................

औत्सुक्यञ्चेति सत्त्वस्य वृत्तयः समुदाहृताः ॥
क्रौर्यं शौर्यं महोत्साहः साभिमानः सकरुकता ।
दार्ढ्यञ्च निर्दयत्वञ्च भेदो दम्भश्च वृत्तयः ।
रजसः प्रतिपत्तव्यं तन्त्रेऽस्मिन्पारमेश्वरे ।



पृष्ठ १९६.

२. अहङ्काराभिमानशृङ्गाराद्यपरनाम्नो रसस्य मानमयविकाररूपेण अभिमानिनां मनसि जाग्रतः······ ।

३. आत्मस्थितं गुणविशेषमहङ्कृतस्य शृङ्गारमाहुरिह जीवितमात्मयोनेः ।
तस्यात्मशक्तिरसनीयतया रसत्वं युक्तस्य येन रसिकोऽयमिति प्रवादः ॥

४. अप्रातिकूलिकतया मनसो मुदादेर्यः संविदोऽनुभवहेतुरिहाभिमानः ।
ज्ञेयो रसः स रसनीयतयात्मशक्ते रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥

५. आत्मनोऽहङ्कारविशेषः सचेतसा रस्यमानो रस इत्युच्यते, यदस्तित्वे रसिकोऽन्यथात्वे नीरस इति ।

पृष्ठ १९७.

१. किमेते रत्यादयः स्वेभ्यः स्वेभ्य आलम्बनेभ्य उत्पद्यमानाः सर्वस्याप्युत्पद्यन्ते उत कस्यचिदेव । यदि तावत्सर्वस्य तदा सर्वं जगद्रसिकं स्यात्, न चैतदस्ति । यतः कश्चिद्रसिकः कश्चिन्नीरसो दृश्यते······असाधारणन्तु प्रत्यगात्मगता-नादिवासनानुबन्धि धर्मकार्यं भवितुमर्हति । तमात्मनोऽहङ्कारगुणविशेषं ब्रूमः, स शृङ्गारः, सोऽभिमानः, स रसः ।

पृष्ठ १९८.

१. भावनीयमनन्यधिया अनेन यो भाव्यते मनसि भावनया स भावः ।

यो भावनापथमनीत्य विवर्तमानः साहंकृतो हृदि परं स्वदते रसोऽसौ ॥

२. रत्यादयो यदि रसाः स्युरतिप्रकर्षे हर्षादिभिः किमपराद्धमतद्विभिन्नैः।
अस्थायिनस्त इति चेद्भयहासशोकक्रोधादयो वद कियच्चिरमुल्लसन्ति ॥

पृष्ठ १९९.

१. तत्रात्मनोऽहङ्कारगुणविशेषं ब्रूमः। स शृङ्गारः, सोऽभिमानः, स रसः। तत एते रत्यादयो जायन्ते। तैश्चायं प्रकर्षप्राप्तैः सप्तार्चिरर्चिश्चयैरिव प्रकाशमानः शृङ्गारिणामेव स्वदत इति।

पृष्ठ २००.

१. Refer to note No. 1 on page 199.

पृष्ठ २०१.

१. प्रेयः प्रियतराख्यानं रसवद्रसपेशलम्।
ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षं च तत्त्रयम् ॥
तत्रोर्जस्वि रूढाहङ्कारमित्यनेन आत्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोऽनेकजन्मानुभवसंस्कारासादितद्रढिम्नः समग्रात्मगुणसम्पदुदयातिशयहेतोः अहङ्कारविशेषस्योपसंग्रहादहङ्काराभिमानशृङ्गारापरनाम्नो रसस्य मानमयविकाररूपेणाभिमानिनां मनसि जागृतः पूर्वां कोटिमुपवर्णयति······।
रसवद्रसपेशलमित्यनेन विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति रत्यादिरूपेणानेकधाविर्भवतोऽभिवर्धमानस्य परप्रकर्षगामिनः शृङ्गारस्य मध्यावस्थाम् अवस्थापयति।······प्रेयः प्रियतराख्यानमित्यनेन समस्तभावमूर्धाभिषिक्तायाः रतेः परप्रकर्षाधिगमात् भावनापथातिक्रमे भावरूपतामुल्लंघ्य प्रेमरूपेण परिणतायाः उपादानात् भावान्तराणामपि परप्रकर्षाधिगमे रसरूपेण परिणतिरिति ज्ञापयन्नहङ्कारस्योत्तरां कोटिमुपलक्षयति।

२. सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियः परिहासप्रियोऽमर्षप्रिय इति प्रेमण्येव पर्यवसानं भवति।

३. रत्यादीनामेकोनपञ्चाशतोऽपि विभावानुभावव्यभिचारिसंयोगात् परप्रकर्षाधिगमे रसव्यपदेशार्हता।

पृष्ठ २०२.

१. तत्र पुरुषार्थनिष्ठाः काश्चित्संविद इति प्राधान्यम्। तद्यथा रतिः कामतदनुपक्षिधर्मार्थनिष्ठा, क्रोधस्तत्प्रधानेष्वर्थनिष्ठः, कामधर्मपर्यवसितोऽप्युत्साहः, समस्तधर्मादिपर्यवसितः तत्त्वज्ञानजनितनिर्वेदप्रायः स्थायिभावो (विभाव ?) (शमश्च ?) मोक्षोपाय इति तावदेतेषां प्राधान्यम्। यद्यपि चैषामन्योन्यं

गुणभावोऽस्ति, तथापि तत्तत्प्रधाने रूपके तत्तत्प्रधानं भवतीति रूपकभेद-पर्यायेण सर्वेषां प्राधान्यमेषां लक्ष्यते ।

एवं रत्यादीनां प्राधान्यम् । हासादीनां तु सातिशयं सकललोकसुलभविभावतयोपरञ्जकत्वम् इति प्राधान्यम् ।

पृष्ठ २०३.

१. एवं ते नव रसाः पुमर्थोपयोगित्वेन रञ्जनाधिक्येन वा इयतामेव उपदेश्यत्वात् । तेन रसान्तरसम्भवेऽपि पार्षत ( द ? ) प्रसिद्धया संख्यानियम इति यदन्यैरुक्तं तदप्ययुक्तम् ।

पृष्ठ २०४.

१. एतदुक्तं भवति–रतिक्रीडा सार्धं च परमार्थतः कामिनोरेव, तत्रैव सुखस्य धाराविश्रान्तेः । अपरस्य ऋतुमाल्यादिविषयसौन्दर्यस्य कविना कृतस्य सङ्कल्पत्वात् संवेदनाद्वितयान्योन्यनिमज्जनात्मकमीलनाख्यो हि परमो भोगः, संविद एव प्रधानत्वात्, अन्यत्र तु जडस्य भोग्यत्वात् । अत एवाह श्वासायासविडम्बनैव वपुषि प्राणाः पुनर्जानकी ।

पृष्ठ २०५.

१. आर्द्रतास्थायिकः स्नेहो रस इति त्वसत्, स्नेहो ह्यभिष्वङ्गः स च सर्वो रत्युत्साहादावेव पर्यवस्यति । तथाहि बालस्य मातापित्रादौ स्नेहोदयो विश्रान्तो यूनोर्मित्रजने······एषैव गर्वस्थायिकस्य लौल्यरसस्य प्रत्याख्याने सरणिर्मन्तव्या, हासे वा रतौ वा अन्यत्र पर्यवसानात् । एवं भक्तावपि वाच्यम् ।

पृष्ठ २०६.

१. रतिरेवास्वाद्यमानो मुख्यश्रृङ्गारः । रतिमास्वादयद्भिः तद्बहुमानपरः श्रृङ्गारीत्युच्यते । यस्तु मज्जनादिपर एव, तद्व्यसनिता । सा रसास्वाददशाकाले भवन्त्यपि न चिरमवतिष्ठते । तदास्वादे चोपयोगि यथास्वं विभावादितया शास्त्रानिषिद्धमजुगुप्सितं संस्कृतं मनोहरञ्च तदुपचाराच्छ्रृङ्गारशब्दवाच्यम् ।

२. एवं रसादीनां तच्छास्त्रवेदिवृद्धव्यवहारतो निरूढानि प्राक्तनमहाचार्यप्रणीतानि नामानि । तदेवोपसंहरति । एवं श्रृङ्गारो रसः । स आचारव्यवहाराल्लोकेऽपि प्रसिद्धः ।

३. यस्तु श्रृङ्गारशब्दस्यात्मीयेन व्युत्पत्तिमाह तस्य स्वरूपमपि विस्मृतम्, आरकन् प्रत्ययो नाऽऽरक् वृन्दारक इति यथा, अत एवोणादिषु निपातितोऽयं शब्दः ।

पृष्ठ २०८.

१. अतएव यत्कैश्चिदाचोद्यत रसेराधारभेदेन भेदात्क्रमेको रस इति, तदनभिज्ञया, एकैव ह्यसौ तावती रतिः, यत्रान्योन्यसंविदैक ( देक ? ) वियोगो न भवति ।

२. तेन विरहेण कृतः सुष्ठुतमां पोषितः इति दर्शयन् मुनिरनेन विना शृङ्गारो न प्रयोगे न काव्ये हृद्यतामवलम्बते इति दर्शयति । तथाहि सम्भोगेप्येकघनशर्करास्वादस्थानीयतापरिहाराय गोत्रस्खलितस्पर्धामन्यद्वा कलहविप्रलम्भहेतुं कवयो निबध्नन्ति ।

पृष्ठ २०९.

१. मुकुटप्रतिशीर्षकादिना तावत्नटबुद्धिराच्छाद्यते । गाढप्राक्तनसंवित्संस्काराच्च काव्यबलानीयमानापि न तत्र रामधीर्विश्राम्यति । अतएवोभयदेशकालपरित्यागः । रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टाः तत्रापि लौकिकदेशकालानियमेन तत्र रतिं गमयन्ति यस्यां स्वात्मापि वासनावत्त्वादनुप्रविष्टः । अतएव न तटस्थतया रत्यवगमः, न च नियतकारणतया येनार्जनाभिष्वङ्गादिसम्भावना, न च नियतपरात्मगततया येन दुःखद्वेषाद्युदयः, तेन साधारणीभूता सन्तानवृत्तेरेकस्या एव वा संविदो गोचरभूता रतिः शृङ्गारः ।

पृष्ठ २१०.

१. अन्यायकारिता प्राधान्येन क्रोधस्य विषयः, तादृशि जने सर्वोपि मनोरथैरपि रुधिरपानमपि नामाद्रियते ।······
तेन हास्यवत्साधारणविभावत्वाच्चर्वणापि क्रोधमय्येवेति तद्रसनाचर्वणे रौद्रः क्रोधात्मक एव ।

पृष्ठ २११.

१. उद्रिक्तं द्वन्द्वं येषान्ते उद्धताः तद्वेषधारिणो ये नटास्ते प्रकृतिः चर्वणोदयहेतुरस्य······तस्मात्सर्व एवैते स्वभावक्रोधनाः, तदनुकारिणि नटे रौद्र आस्वाद्य इति मनुष्यप्रकृतिः ।

पृष्ठ २१२.

१. यदेव बीभत्सस्य दर्शनं विभावादिरूपं स एव भयानकः तद्विभावत्वादुपचारस्य सहभावप्रतीतिः फलम् ।

पृष्ठ २१३.

१. रुधिरान्त्रादिदर्शनाद्यो बीभत्सः क्षोभणत्वाच्छुद्धः । यस्तु विष्टादिभ्यः सः

उद्वेगी हृदयं चालयति सोऽशुद्धः, अशुद्धविभावकत्वात्। उपाध्यायस्त्वाह बीभत्सस्तावद्विभावविशेषात्, यत्र तु संसारनाट्यनायकरागप्रतिपक्षतया मोक्षसाधनत्वाच्छुद्धः, यदाहुः 'शोकारत्वाङ्गं जुगुप्सते' इति। तथा 'वितर्कबाधने प्रतिपक्षभावनम्' इति। तेन सोपि परमार्थतः त्रिविध एव। द्वितीयक इत्यनेन तस्य दुर्लभत्वेनामाधुर्यं सूचयति।

पृष्ठ २१५.

१. ये तु रत्याद्यनुकरणरूपं रसमाहुः ते चोदयन्ति शोकः कथं सुखहेतुरिति। परिहरन्ति च, अस्ति कोपि नाट्यगतानां विशेष इति। तत्र चोद्यं तावदसत्। शोको हि तावत्प्रतीयमानः किं स्वात्मनि प्रत्येतुर्दुःखं वितनोतीति नियमः, शत्रुदुःखे प्रहर्षात्, अन्यत्र मध्यस्थत्वात्।

पृष्ठ २१६.

१. अस्मन्मते तु संवेदनमेवानन्दघनमास्वाद्यते। तत्र का दुःखाशङ्का केवलं तस्यैव चित्रताकरणे रतिशोकादिवासनाव्यापारः, तदुद्बोधने चाभिनयादिव्यापारः।

पृष्ठ २१७.

१. नन्वेवं व्यभिचार्यभेदात्करुणः कथं विप्रलम्भाद्भिद्यत इत्याशङ्क्याह करुणस्त्विति। अधमप्रकृतेस्तावन्न विप्रलम्भः स्थाय्यभावात्, तदभावो विभावसामग्रीवैकल्यादिति तत्र तावत् करुणः पृथक् लब्धप्रतिष्ठ एव। उत्तमप्रकृतावपि रतिविपरीतः शोकः करुणे स्थायी। अतएवाह निरपेक्षो बन्धुजनादिविषये याऽपेक्षा रताविवालम्बनं यथोक्तम् 'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम्' इति ( मेघ १–१० ) ततो निष्क्रान्तो भावः शोकाख्यो यस्मिन्, शापक्लेशे विनिपतितस्येष्टजनस्य यो विभवनाशो वधः बन्धो वा ततः समुत्थानं यस्य। शापग्रहणेन अप्रतीकार्यत्वे सति उत्तमप्रकृतेः शोकोदयस्थानमेतदिति दर्शयति।

२. अन्ये त्वाहुः मरणमिति न जीवितवियोग उच्यते, अपि तु चैतन्यावस्थैव प्राणत्यागकर्तृतात्मिका या सम्बन्धाद्यवमरगता मन्तव्या व्यभिचारिभावेनेति।

पृष्ठ २१८.

१. या दया हृदयगता हि करुणा लोके प्रसिद्धा सा च लिङ्गैरनुकर्तरि शोकं प्रतीयता सामाजिकानामिति करुणव्यपदेशः इति श्रीशङ्कुकः। एतच्च पूर्वापरविस्मरणविजृम्भितमस्य, यतः शोकः प्रकृतिरस्य, करुणा दया च नाम

परित्राणेच्छा सा कथं शोकानुकरणम् , किं प्रति च तेषां दयेति न विद्मः ।

२. यथा च गोत्रकुलाचारोत्पन्नान्याप्तोपदेशसिद्धानि पुंसां नामानि भवन्ति तथैवैषां भावानाञ्च नाट्याश्रितानाञ्चार्थानामाचारोत्पन्नान्याप्तोपदेशसिद्धानि नामानि ।

३. करुण इति शोकस्य सर्वसाधारणत्वेन प्राग्युक्त्या आस्वाद्यमानस्य संज्ञा ।

पृष्ठ २१९.

१. अद्भुतो नाम विस्मयस्थायिभावात्मकः............

यत्त्वतिशयार्थयुक्तं वाक्यं शिल्पं च कर्मरूपं वा ।
तत्सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् ॥

२. त्रासोद्वेगौ परगतौ............

भयं तावत् स्त्रीनीचबालादिषु वक्ष्यते नोत्तममध्यमप्रकृतिषु । तेऽपि गुरुभ्यो राज्ञश्च भयं दर्शयेयुः ।

पृष्ठ २२६.

१. तत्र केचिदाहुः—शान्तः शमस्थायिभावात्मकस्तपस्यायोगिसम्पर्कादिभिः विभावैरुत्पद्यते, तस्य कामक्रोधाद्यभावरूपैरनुभावैरभिनयः, व्यभिचारी धृतिमतिप्रभृतिः इति ।

पृष्ठ २२७.

१. एतदपरे न सहन्ते शमशान्तयोः पर्यायत्वादेकोनपञ्चाशद्भावा इति सङ्ख्यात्यागात् । किञ्च विभावा ऋतुमाल्यादयस्तत्समनन्तरभाविनि श्रृङ्गारादावनुसन्धीयन्ते इत्युक्तम् । तपोऽध्ययनादयस्तु न । शान्तस्य शमनस्य ये हेतवः ते तत्त्वज्ञानस्यानन्तरहेतव इति चेत् पूर्वोदिततत्त्वज्ञानेऽपि तर्हि प्रयोज्यतेति तपोऽध्ययनादीनां विभावताऽयुक्ता स्यात् । कामाद्यभावोऽपि नानुभावः, शान्ताद्विपक्षादव्यावृत्तेः अगमकत्वात्प्रयोगासमवायित्वाच्च । न हि चेष्टाव्युपरमः प्रयोगयोग्यः सुप्तमोहादयोऽपि हि निःश्वासोच्छ्वासपतनभूशयनादिभिश्चेष्टाभिरेवानुभाव्यन्ते । धृतिप्रभृतिरपि प्राप्तविषयोपभोगः कथं शान्ते स्यात् । न चाकिञ्चित्करत्वमात्रेण तत्त्वज्ञानोपायो व्युत्पाद्यते विनेये । नैते परदुःखदुःखितमनसो दृश्यन्ते सम्यग्दर्शनसमावस्थाप्राप्ता अपि तु संसारे । तन्न शान्तो रस इति ।

पृष्ठ २२९.

१. तत्त्वज्ञानोत्थितो निर्वेद इति केचित् । तथाहि दारिद्र्यादिप्रभवो यो निर्वेदस्ततोऽन्य एव हेतोस्तत्त्वज्ञानस्य वैलक्षण्यात् । स्थायिसञ्चारिमध्ये चैत-

दर्थमेवायं पठितोऽन्यथा माङ्गलिको मुनिस्तथा न पठेद्। जुगुप्सां च व्यभिचारित्वेन शृङ्गारे निषेधन्मुनिर्भावानां सर्वेषामेव स्थायित्वसञ्चारित्वचिन्तनासात्वत्वानुभावस्थत्वाभियोग्यतोपनिपातितां निरशब्दार्थबलाकृष्टां वा नानुजानाति। तत्त्वज्ञानजश्च निर्वेदः स्थाय्यन्तरोपमर्दकः, भाववैचित्र्यसहिष्णुभ्यो रत्यादिभ्यो यः परमस्थायिशीलः स एव हि स्थाय्यन्तराणामुपमर्दकः।

पृष्ठ २३१.

१. चित्तं हि ज्ञानसुखादिशीलत्वात् प्रवृत्तिगुणादिमत्त्वात् आलस्यदैन्यादिमत्त्वाच्च सत्त्वरजस्तमोगुणकं भवति। तत्र सत्त्वाकिञ्चिद्विहूने रजस्तमसी मिथः समे यदा भवतः तदा सत्त्वात् सद्ध्यानाभिमुखं भूत्वा तमसा तत्पिधाने सति रजसैश्वर्यं कामयमाने विषयप्रियं भवति विक्षिप्तम्। यदा तु तमःप्रधानं चित्तं मूढं तदाऽश्रेयोऽधर्माऽज्ञानाऽवैराग्याऽनैश्वर्यमुपगच्छति।······यदि पुनः सत्त्वप्रधानं वितमस्कं सरजस्कं भवति तदैकाग्र्यं संप्रज्ञातयोगसिद्धयोर्मध्यमयोगिनोश्चित्तं धर्मज्ञानवैराग्यैश्वर्यवद्भवति। यदा तु विधूतरजस्तमोमलं शुद्धसत्त्वं चित्तं तदानीं विवेकख्यातिं कृत्वा पुरुषमात्रध्यानं धर्ममेघाख्यं करोति तत् परं प्रसंख्यानमित्याचक्षते ध्यायिनः।··············विवेकख्याताविपि विरक्तं सच्चित्तं तां निरुद्ध्य संस्कारमात्रशेषं भवति चतुर्थस्य योगिनः, सोयमसंप्रज्ञातसमाधिः।

पृष्ठ २३२.

१. तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्। उक्तवैराग्यदृढतरगुणपुरुषविवेकज्ञानाद् धर्ममेघसमाधिरूपाद्धेतोरुत्पद्यमानं······यद्वैतृष्ण्यं चित्तस्य ज्ञानप्रसादावस्था निष्पन्नात्मज्ञानतारूपा तत्परमुत्कृष्टं वैराग्यमित्यर्थः।

पृष्ठ २३३.

१. यदा तु रजस्तमोलेशानुविद्धमन्तःकरणसत्त्वं भाव्यते तदा गुणभावाच्चित्तवृत्तेः सुखप्रकाशमयस्य सत्त्वस्य भाव्यमानस्योद्रेकात् सानन्दः समाधिर्भवति। अस्मिन्नेव समाधौ ये बद्धधृतयः तत्त्वान्तरं प्रधानपुरुषरूपं न पश्यन्ति ते विगतदेहाहङ्कारत्वात् विदेहशब्दवाच्याः।

२. भवप्रत्ययो विदेहप्रकृतिलयानाम्। १९।
अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु प्रकृतिष्वात्मत्वभावनया लीनाः प्रकृतिलयाः।

पृष्ठ २३४.

१. विपर्ययेष्विव ज्ञानेऽपि विनाशित्वादिदोषदर्शनसत्त्वेऽपि अविद्यानिवृत्त्यात्यप्रयो-

अनवतीन तत्र नालं वुद्धिरूपं वैराग्यम्। सम्यग्ज्ञानेनाविद्यानिवृत्तौ च तेनैव दोषदर्शनेन तत्राप्युपेक्षारूपं वैराग्यमिति भावः। यो. सू., भा. १.२०

२. ननु मिथ्याज्ञानमूलो विषयगान्धरस्तत्त्वज्ञानात्प्रशाम्यतीति 'दुःखजन्म' सूत्रेणाक्षपादपादैर्भगवद्भिर्मिथ्याज्ञानापचयकारणतत्त्वज्ञानं वैराग्यस्य दोषापायलक्षणस्य कारणमुक्तम्। ननु ततः किम्। ननु वैराग्यं निर्वेदः। क एवमाह। निर्वेदो हि शोकप्रवाहप्रसररूपश्चित्तवृत्तिविशेषः। वैराग्यं तु रागादीनां प्रध्वंसः। भवतु वा वैराग्यमेव निर्वेदः, तथापि तस्य स्वकारणवशात्मध्यभाविनोऽपि न मोक्षे साध्ये सूत्रस्थानीयतेत्यपाद्यारी एव। किञ्च तत्त्वज्ञानोत्थितो निर्वेद इति शमस्यैवेदं निर्वेद इति नाम कृतं स्यात्।

पृष्ठ २४०.

१. तस्य प्रशान्तवाहिता संस्कारात्। ३–१०।
तस्य चेतसो निरुद्धनिरोधसंस्कारात् प्रशान्तवाहिता भवति। परिहृतविक्षेपतया सदृशप्रवाहपरिणामि चित्तं भवतीत्यर्थः।

पृष्ठ २४१.

१. तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः। ४–२७।
तस्मिन् समाधौ स्थितस्य छिद्रेष्वन्तरालेषु यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि तानि प्राग्भूतेभ्यः व्युत्थानानुभवजेभ्यः संस्कारेभ्यः अहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति।

पृष्ठ २४२.

१. इह तत्त्वज्ञानमेव तावन्मोक्षसाधनमिति तस्यैव मोक्षे स्थायिता युक्ता। तत्त्वज्ञानं च नाम आत्मज्ञानमेव। ············तेनात्मैव ज्ञानानन्दादिविशुद्धधर्मयोगी परिकल्पितविषयोपभोगरहितोऽत्र स्थायी। न चास्य स्थायितया स्थायित्वं वचनीयम्। रत्यादयो हि तत्तत्कारणान्तरोदयप्रलयोपद्यमाननिरुध्यमानवृत्तयः कञ्चित्कालमापेक्षिकतया स्थायिरूपात्मभित्तिसंश्रयाः स्थायिन इत्युच्यन्ते। तत्त्वज्ञानं तु सकलभावान्तरभित्तिस्थानीयं सर्वस्थायिभ्यः स्थायितमं सर्वा रत्यादिकाश्चित्तवृत्तीर्व्यभिचारीभावयन् निसर्गत एव सिद्धस्थायिभावमिति किं तत्प्रवचनेन। अत एव पृथगस्य गणना न युक्ता। न हि खण्डमुण्डयोर्मध्ये तृतीयं गोत्वमिति गण्यते। तेनैकाद्य ( कोन ) पञ्चाशद्भावा इति अध्याहृतमेव।

पृष्ठ २४४.

१. तथापि न सम्भवन्मात्रस्थायिनां गणनम्, रसेषूक्तेष्वनुपयोगात्, अपितु व्यभिचारिलक्षणीयत्वं विज्ञायते नेति। तथा श्लोकाष्टपञ्चाशता भावैरित्येकप्रघट्टकोपपत्तिः।

२. न चास्यात्मस्वभावस्य व्यभिचारित्वसम्भवाद्वैचित्र्यावहत्वादनौचित्याच्च शमशब्देन मुनिना व्यपदेशः। यदि तु स एव शमशब्देन व्यपदिश्यते निर्वेदशब्देन वा तत्र कश्चिद्भावः केवलं शमश्चित्तवृत्त्यन्तरं निर्वेदोऽपि दारिद्र्यादिविभावान्तरोत्थितनिर्वेदतुल्यजातीयो न भवति। तज्जातीय एव हेतुभेदेऽपि तद्व्यपदेश्यो रतिभयादिभिरिव। तदिदमात्मस्वरूपमेव तत्त्वज्ञानं शमता च।

पृष्ठ २४९.

१. तत्त्वास्वादोऽस्य कीदृशः। उच्यते, उपरागदायिभिरुत्साहरत्यादिभिरुपरक्तं यदात्मस्वरूपं तदेव विरलोम्भितरत्नान्तरालनिर्भासमानसिततरसूत्रवदाभातस्वरूपं सकलेषु रत्यादिकेषूपरञ्जकेषु तथाभावेनापि सकृद्विभातोयमात्मेति न्यायेन भासमानं परोन्मुखतात्मकसकलदुःखजालहीनं परमानन्दलाभसंविदेकत्वेन काव्यप्रयोगप्रबन्धाभ्यां साधारणतया निर्भासमानम् अन्तर्मुखावस्थाभेदेन लोकोत्तरानन्दानयनं तथाविधहृदयं विधत्ते।

पृष्ठ २५०

१. रतिरास्वादनाख्यां प्रीतिं विदधाना न तां रतिरूपामेव विधत्ते, प्रमुखे विभावादौ असाधारण्यात्। हासे तु य आस्वादः सोऽपि विकृतवेषादीनां सामाजिकान्प्रति लोकवृत्तेन हासहेतुत्वेति विभावसाधारण्यद्वारेण तदेकस्वभाव एवेति हासात्मकरसनाख्यचर्वणाचर्वणीयत्वाद्धास्य। रतिशोकावेव परमतज्जातीयसंविदास्वादौ धारारूढसुखदुःखरूपत्वेन निस्साधारणात्मीयस्वनियमग्रहगृहीतहेतुबलादेवोपपद्येते यतः, अतोऽनयोर्मुनिना प्रभवग्रहणं कृतम्। अन्येषु तु विभावे साधारण्यसम्भवात् तदात्मकग्रहणम्।

पृष्ठ २५३.

१. यद्यपि दूराकर्षणमोहमन्त्र इव.........इत्यादौ रावणवाक्ये तावति रत्याभासतैव न हासः स्फुरति। तथापि सीताविभावलक्षणं रावणवयःप्रकृतिविरुद्धं च चिन्तादैन्यमोहादिकं व्यभिचारिजातम् अश्रुपातपरिदेवितादि चानुभावजातम् अनौचित्यात् तदाभासरूपं सत् हास्यविभावरूपम्।

२. तेन करुणाद्याभासेष्वपि हास्यत्वं सर्वेषु मन्तव्यम् ।······अमोक्षहेतावपि तदाभासतायां शान्ताभासः । हास्य एव प्रहसनरूपस्य, अनौचित्यस्यागः सर्वपुरुषार्थेषु व्युत्पाद्यः ।

पृष्ठ २५४.

१. यदीयफलानन्तरं द्वितीयरसोऽवश्यंभावी तस्योदाहरणं रौद्रः । रौद्रस्य हि फलं वधबन्धादि तद्विभावकेनावश्यं करुणेन भाव्यम् ।

पृष्ठ २५५.

१. एवं वीराद्भयानकोत्पत्तिः यथा 'कर्णस्यात्मजमग्रतः शमयतो भीतं जगत् फाल्गुनात्' ( वेणी. ५, ५. )

२. युद्धवीरे च पराजयजनितः प्रतापापरपर्यायः शत्रुहृदयदाहदायी तद्वनितासु भयानक एव जीवितम् ।

३. यस्तु रसो रसान्तरं फलत्वेनाभिसन्धाय प्रवर्त्तते तस्योदाहरणं वीरः । महापुरुषोत्साहो हि जगद्विस्मयफलानुसन्धानेनैव ।

४. रौद्रस्तु परविनाशनं फलत्वेनाभिसन्धाय प्रवर्तते । न करुणमिति शेषः ।

पृष्ठ २५६.

१. ननु सामाजिकानां तथाभूतराक्षसादिदर्शने कथं क्रोधात्मक आस्वादः । उच्यते, हृदयसंवाद आस्वादः । क्रोधे च हृदयसंवादस्तामसप्रकृतीनामेव सामाजिकानाम् इति दानवादिसदृशास्तन्मयीभूता एव अन्यायकारिविषयं क्रोधम् आस्वादयन्ति ।

पृष्ठ २५७.

१. वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता ।
अङ्गनेपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि ॥

पृष्ठ २५९.

१. उपमा रूपकं चैव दीपकं यमकं तथा ।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः ॥

पृष्ठ २६०.

१. स मुहूर्तं गते तस्मिन्देवलोकं मुनिस्तदा ।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥

स तु तीरं समासाद्य तमसाया मुनिस्तदा ।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ।
अकर्दममिदं तीर्थं भरद्वाज निशामय ।
रमणीयप्रसन्नाम्बु सन्मनुष्यमनो यथा ॥
न्यस्यतां कलशस्तात दीयतां वल्कलं मम ।
इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥
एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना ।
प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ॥
स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः ।
विचचार ह पश्यंस्तत् सर्वतो विपुलं वनम् ॥
तस्याभ्यासे तु मिथुनं चरन्तमनपायिनम् ।
ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिस्स्वनम् ॥
तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः ॥
तं शोणितपरीताङ्गं वेष्टमानं महीतले ।
भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥
वियुक्ता पतिना तेन द्विजेन सहचारिणा ।
ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥
तथा तु तं द्विजं दृष्ट्वा निषादेन विपातितम् ।
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥
ततः करुणवेदित्वादधर्मोऽयमिति द्विजः ।
निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥
तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।
शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥
चिन्तयन्स महाप्राज्ञश्चकार मतिमान्मतिम् ।
शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥
पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥

पृष्ठ २६६.

१. काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व–

स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयम्
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥

२. बुधस्यैकस्य प्रामादिकमपि तथाभिधानं स्यात्, न तु भूयसां तद्युक्तम् । तेन बुधैरिति बहुवचनम्, एतदेव व्याचष्टे परम्परयेति । अविच्छिन्नेन प्रवाहेण तैरेतदुक्तम्, विनापि विशिष्टपुस्तकेषु विवेचनादित्यभिप्रायः । न च बुधा भूयांसोऽनादरणीयं वस्त्वादरेणोपदिशेयुः, एतत्त्वादरेणोपदिष्टम् । तदाह सम्यगाम्नातपूर्व इति । पूर्वग्रहणेनेदंप्रथमता भात्र संभाव्यत इत्याह व्याचष्टे च समाख्यातः सम्यगासमन्तात् ख्यातः प्रकटित इत्यनेन । तस्येति, यस्याधिगमाय प्रत्युत यतनीयं का तत्रासंभावना । अतः किं कुर्मः अपारं मौर्ख्यमभाववादिनामिति भावः ।

३. न चास्माभिरभाववादिनां विकल्पाः श्रुताः । किन्तु संभाव्य दूषयिष्यन्ते । अतः परोक्षत्वम् ।
अविच्छिन्नेन प्रवाहेण तैरेतदुक्तम् । विनापि विशिष्टपुस्तकेषु विवेचनादित्यभिप्रायः ।

४. भट्टोद्भटवामनादिना । भामहोक्तं शब्दश्छन्दोभिधानार्थ इत्यभिधानस्य शब्दाद् भेदं व्याख्यातुं भट्टोद्भटो बभाषे शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च इति । वामनोपि सा सादृश्याल्लक्षणा वक्रोक्तिः इति मनाक्स्पृष्ट इति तैरतावद् ध्वनिदिगुन्मीलिता ।

पृष्ठ २६७.

१. तथा चान्येन कृत एवात्र श्लोकः ।
यस्मिन्नस्ति न वस्तु किंचन मनःप्रह्लादि सालंकृति
व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत् ।
काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः ।
तथाचान्येनेति । ग्रन्थकृत्समानकालभाविना मनोरथनाम्ना कविना ।

पृष्ठ २६८.

१. वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ।
अन्वितानामेव अभिधानं शब्दबोध्यत्वं तद्वादिनो मीमांसकाः । तेषां मते अन्वितघटादावेव घटादिपदानां शक्तिः । शाब्दबोधे तु आकाङ्क्षादिवशात् वृत्तितादितिनेपरूपमेव भासते इति नापदार्थो वाक्यार्थः ।

अथ च

वाच्यादयस्तदर्थाः स्युस्तात्पर्यार्थोऽपि केषुचित् ।

..........केषुचित्—न्यायादिनयेषु । ननु मीमांसकादिमतेष्वपि । न्यायादीति, आदिना वैशेषिकभाट्टनयसंग्रहः । मीमांसकाः प्राभाकराः अभिमताः ।

पृष्ठ २६९.

१. मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते ।
रूढेः प्रयोजनाद् वासौ लक्षणाशक्तिरर्पिता ॥

पृष्ठ २७१.

१. ननु तात्पर्यशक्तिरपर्यवसिता विवक्षया दृप्तधार्मिक-तदादिपदार्थान्वयरूपमुख्यार्थबाधकबलेन विरोधनिमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः । एवमनेनोक्तमिति हि व्यवहारस्तत्र वाच्यातिरिक्तोऽन्योऽर्थं इति ।

पृष्ठ २७५.

१. सदपि वा तत् अभिधाक्षिप्तम्, शब्दावगतार्थबलाकृष्टत्वाद् भाक्तम् । तदनाक्षिप्तमपि वा न वक्तुं शक्यम्, कुमारीष्विव भर्तृसुखम् अतद्विरसु ।

पृष्ठ २७९.

१. तस्मात्प्रवादमात्रं ध्वनिः, न त्वस्य क्षोदक्षमं तत्त्वं किंचिदपि प्रकाशयितुं शक्यम् ।

पृष्ठ २८२.

१. एवं घण्टादिनिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽर्थो ध्वनिरिति व्यवहृतः । इत्येवं प्रकारोऽव्यक्तशब्दानामेव वर्तते । व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाऽभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः । यथाह भगवान् स एव
प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥
इति । तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ ।

२. किं च वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु, यथोक्तम्:—
अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥

इति। तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभ्यधिकः स ध्वनिरुक्तः, यदाह स एव :—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥

इति। अस्माभिरपि प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधातात्पर्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो ध्वनिरित्युक्तः।

३. पञ्चापि ध्वनिशब्दार्थे येन यत्र यतो यस्य यस्मै इति बहुव्रीह्याश्रयणेन *यथोचितं सामानाधिकरण्यम् सुयोज्यम्।*

पृष्ठ २८३.

१. ननु घटेऽपि जीवव्यवहारः स्यात्। आत्मनो विभुत्वेन तत्रापि भावात्। शरीरस्य खलु विशिष्टाधिष्ठानयुक्तस्य सत्यात्मनि जीवव्यवहारः, न यस्य कस्यचिदिति चेत्, गुणालङ्कारौचित्यसुन्दरशब्दार्थशरीरस्य सति ध्वननात्मन्यात्मनि काव्यरूपताव्यवहारः। न चात्मनोऽसारता काचिदिति समानम्।

पृष्ठ २८५.

१. यत्र लक्षणाव्यापारात् तृतीयादन्यश्चतुर्थः प्रयोजनद्योतनात्मा व्यापारो वस्तुस्थित्या सम्भवन्नप्यनुपयुज्यमानत्वेनाऽनाद्रियमाणत्वादसत्कल्पः, यमर्थमधिकृत्य प्रवर्तते तद्धि प्रयोजनलक्षणम्, तत्रापि लक्षणास्तीति कथं ध्वननं लक्षणा चेत्येकं तत्त्वं स्यात्।

पृष्ठ २८६.

१. प्रयोजनावगमस्य सुखसम्पत्तये हि स शब्दः प्रयुज्यते तस्मिन्नमुख्यार्थे। यदि च सिंहो वटुः इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य, तत्तर्हि प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः, उपचारेण करिष्यतीति-चेत्तत्रापि प्रयोजनान्तरमन्विष्यते, तत्राप्युपचारेऽनवस्था। अथ न तत्र स्खलद्गतित्वम्, *तर्हि प्रयोजनेऽवगमयितव्ये न लक्षणाख्यो व्यापारः।* न चासावभिधा समयस्य तत्राभावात्। यद्व्यापारान्तरमभिधालक्षणातिरिक्तं स ध्वननव्यापारः।

पृष्ठ २८७.

१. तत्र लक्षणा तावद्मुख्यो व्यापारः, ध्वननञ्च प्रयोजनविषयम्। न च तद्विषयोऽपि द्वितीयो लक्षणाव्यापारो युक्तः। लक्षणासामग्र्यभावात्, इत्यभिप्रायेणाह 'अपि च' इत्यादि। मुख्यां वृत्तिमभिधाव्यापारं परित्यज्य—परिसमाप्य,

गुणवृत्त्या–लक्षणारूपया अर्थस्यामुख्यस्य दर्शनं प्रत्यायना सा यत्फलं कर्म-भूतं प्रयोजनरूपम् उद्दिश्य क्रियते तत्र प्रयोजने तावद् द्वितीयो व्यापारः। नचासौ लक्षणैव, यतः स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिः–अवबोधनशक्तिर्यस्य शब्दस्य तदीयो व्यापारो लक्षणा। न च प्रयोजनमव-गमयतः शब्दस्य बाधकयोगः, तथाभावे निमित्तान्तरस्य प्रयोजनान्तरस्य चान्वेषणेऽनवस्था स्यात्।

पृष्ठ २८९.

१. ननु किं बाधया, इयदेव लक्षणास्वरूपम् 'अभिधेयाविनाभूतप्रतीतिर्लक्षणो-च्यते' इति। इह चाभिधेयानां विभावानुभावादीनामविनाभूता रसादय इति लक्ष्यन्ते, विभावानुभावयोः कारणकार्यरूपत्वात् व्यभिचारिणां च तत्सहकारित्वादितिचेत् मैवम्, धूमशब्दाद् धूमे प्रतिपन्ने ह्यग्निस्मृतिरपि लक्षणाकृतैव स्यात्। ततोऽग्नेः शीतापनोदस्मृतिरित्यादिरपर्यवसितः शब्दार्थः स्यात्। धूमशब्दस्य स्वार्थविश्रान्तत्वान्न तावति व्यापार इति चेत्, आयातं तर्हि मुख्यार्थबाधो लक्षणाया जीवितमिति। सति हि तस्मिन्स्वार्थविश्रा-न्त्यभावात्, न च विभावादिप्रतिपादने बाधकं किंचिदस्ति।

पृष्ठ २९०.

१. व्यापारश्च नाभिधात्मा समयाभावात्। न तात्पर्यात्मा तस्यान्वयप्रतीतावेव परिक्षयात्। न लक्षणात्मा। उक्तादेव हेतोः स्खलद्गतित्वाभावात्। तत्रापि हि स्खलद्गतित्वे पुनर्मुख्यार्थबाधा निमित्तं प्रयोजनमित्यनवस्था स्यात्।

पृष्ठ २९३.

१. योऽप्यन्विताभिधानवादी 'यत्परः शब्दः स शब्दार्थः' इति हृदये गृहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घमिच्छति, तस्य यदि दीर्घदीर्घो व्यापारस्त-देकोऽसाविति कुतः, भिन्नविषयत्वात्। अथानेकोऽसौ, तद्विषयसहकारिभेदा-दसजातीय एव युक्तः। सजातीये च कार्ये विरम्य व्यापारः शब्दकर्मबुद्ध्या-दीनां पदार्थविद्भिर्निषिद्धः। असजातीये चास्मन्नय एव।

पृष्ठ २९४.

१. अथ योऽसौ चतुर्थकक्षानिविष्टोऽर्थः स एव झटिति वाक्येनाभिधीयते इत्येवं-विधं दीर्घदीर्घत्वं विवक्षितम्। तर्हि तत्र संकेताकरणात् कथं साक्षात्प्रति-पत्तिः। निमित्तेषु संकेतः नैमित्तिकस्त्वसावर्थ इति संकेतानपेक्ष एवेति चेत्, पश्यत श्रोत्रियस्योक्तिकहतबुद्धेरक्लिष्टकौशलम्, यो ह्यसौ पर्यन्तकक्षाभागर्थः

प्रथमं प्रतीतिपथमवतीर्णस्तस्य पश्चात्तनाः पदार्थाः निमित्तभावं गच्छन्तीति नूनं मीमांसकस्य प्रवीत्रं प्रति नैमित्तिकत्वमभिमतम् ।

२. अथोच्यते पूर्वं तत्र संकेतग्रहणसंस्कृतस्य तथा प्रतिपत्तिर्भवतीत्यमुया वस्तुस्थित्या निमित्तत्वं पदार्थानाम्, तर्हि तदनुसरणोपयोगि न किंचिदुक्तं स्यात्। न चापि प्राक् पदार्थेषु संकेतग्रहणम्, अन्वितानामेव सर्वदा प्रयोगात् ।

३. आवापोद्वापाभ्यां तथाभाव इति चेत् संकेतः पदार्थमात्रे एवेत्यभ्युपगमे पाश्चात्यैव विशेषप्रतिपत्तिः ।

पृष्ठ २९५.

१. श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ।

पृष्ठ २९७.

१. यत्तु भट्टनायकेनोक्तम् इह दृप्तसिंहादिपदप्रयोगेऽपि धार्मिकपदप्रयोगे च भयानकरसावेशकृतैव निषेधावगतिः; तदीयभीरुधीत्वप्रकृतिनियमावगममन्तरेणैकान्ततो निषेधगत्यभावात् इति, तत्र केवलार्थसामर्थ्यान्निषेधगतेर्निमित्तमिति, तत्रोच्यते, केनोक्तमेतत् 'वक्तृप्रतिपत्तृविशेषावगमविरहेण शब्दगतध्वननव्यापारविरहेण च निषेधावगतिः' इति । वक्तृप्रतिपत्तृप्रतिभासहकारित्वं ह्यस्माभिर्द्योतनस्य प्राणत्वेनोक्तम् । भयानकरसावेशश्च न वर्ण्यस्य । भयमात्रोत्पत्त्यभ्युपगमात् । प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव । रसस्य च शब्दवाच्यत्वं तेनापि नोपगतमिति व्यङ्ग्यत्वमेव ।

पृष्ठ ३०१.

१. अर्थो गुणीकृतात्मा गुणीकृताभिधेयश्च शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति तेषु कथं तस्यान्तर्भावः, व्यङ्ग्यप्राधान्ये हि ध्वनिः ।

पृष्ठ ३०२.

१. रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थिताः तत्र काव्ये ध्वनिरिति व्यपदेशः ।

२. उपमया यद्यपि वाच्यार्थोऽलंक्रियते तथापि तस्य तदेवाऽलंकरणं यद्व्यङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधानमिति ।

३. यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषय इत्युच्यते तर्हि उपमादीनां प्रविरलविषयता निर्विषयता वाऽभिहिता स्यात्, यस्मादचेतनवस्तु-

वृत्ते वाक्यार्थीभूते पुनश्चेतनवस्तुवृत्तान्तयोजनया यथाकथंचिद्भवितव्यम् । अथ सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो नासौ रसवदलङ्कारस्य विषय इत्युच्यते, ननु महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात् ।

पृष्ठ ३०३.

१. रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ स्मृतः ॥
रससमवधानेन विभावादिघटनामेव कुर्वंस्तु कविः नान्तरीकतया यमासादयति स एवात्रालङ्कारो रसमार्गे नान्यः, एतेन वीराद्भुतादिष्वपि चेदासादयति यमकादि, कवेः प्रतिपत्तुश्च रसविघ्नकार्येव तत् । सर्वत्र गड्डरिकाप्रवाहोपहतसहृदयधुराधिरोहणविहीनलोकावर्जनाभिप्रायेण तु मया 'श्रृङ्गारे विप्रलम्भे च विशेषतः' इत्युक्तमिति भावः ।
यमके च प्रबन्धेन बुद्धिपूर्वकं क्रियमाणे नियमेनैव यत्नान्तरपरिग्रह आपतति शब्दविशेषान्वेषणरूपः ।

पृष्ठ ३०४.

१. अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहंपूर्विकया परापतन्ति, यथा कादम्बर्यां कादम्बरीदर्शनावसरे, यथा च मायारामादिशिरोदर्शनविह्वलायां सीतादेव्यां सेतौ । युक्तं चैतत् । यतो रसा वाच्यविशेषैरेवाक्षेप्तव्याः, तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलङ्काराः । तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ, यमकदुष्करमार्गेषु तु तत्स्थितमेव ।
२. तत्र प्रतीयमानस्य तावद्द्वौ भेदौ, लौकिकः काव्यव्यवहारगोचरश्चेति । लौकिको यः शब्दवाच्यतां कदाचिदधिशेते, स च विधिनिषेधाद्यनेकप्रकारो वस्तुशब्देनोच्यते। सोऽपि द्विविधः। यः पूर्वं क्वापि वाक्यालङ्कारभावमुपमादिरूपतयान्वभूत्, इदानीं त्वनलङ्काररूप एवान्यत्र गुणीभावाभावात्पूर्वप्रत्यभिज्ञानबलादलङ्कारध्वनिरिति व्यपदिश्यते ब्राह्मणश्रमणन्यायेन । तद्रूपताभावेन तूपलक्षितं वस्तुमात्रमुच्यते । मात्रग्रहणेन हि रूपान्तरं निराकृतम् । यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः किं तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुदित–प्राङ्निविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणव्यापाररसनीयरूपो रसः ।

पृष्ठ ३०५.

१. स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः। क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपः।

२. क्वचिद्वाच्ये विधिरूपेऽनुभयरूपः।

३. क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितः।

४. यदा तु विभावानुभावावपि व्यङ्ग्यौ भवतः तदा वस्तुध्वनिरपि किं न सह्यते।

पृष्ठ ३०६.

१. तच्चासंख्यत्वादभिधाव्यापारेणाशक्यसमर्पणम्। क्रमेणार्प्यमाणमप्येकधीविषयभावाभावाच्च चित्रचर्वणापदमिति न चारुत्वातिशयकृत्। प्रतीयमानं तु तदसंख्यमनुद्भिन्नविशेषत्वेनैव किं किं रूपं न सहत इति चित्रपानकरसधूपगुडमोदकस्थानीयविचित्रचर्वणापदं भवति।

२. वस्त्वलङ्कारौ शब्दाभिधेयत्वमध्यासाते, तावद्रसभावतदाभासतत्प्रशमाः पुनर्न कदाचिदभिधीयन्ते, अथ चास्वाद्यप्राणतया प्रतिभान्ति, तत्र तु ध्वननव्यापारादृते नास्तिकल्पनान्तरम्, स्खलद्गतित्वाभावे मुख्यार्थबाधादेर्लक्षणानिबन्धनस्यानाशङ्कनीयत्वात्।

पृष्ठ ३०७.

१. तदङ्गभावभाजश्चित्तवृत्तेः प्रशम एव प्रकान्ताया हृदयमाह्लादयति यतो विशेषेण, तत एव तत्संगृहीतोऽपि पृथग्गणितोऽसौ।

पृष्ठ ३०९.

१. योऽर्थ उपपद्यमानोऽपि तावतैवानुपयोगाद्धर्मान्तरसंवलनयान्यतामिव गतोऽपि लक्ष्यमाणोऽनुगतधर्मिसूत्रन्यायेनास्ते स रूपान्तरपरिणत उक्तः।

पृष्ठ ३१०.

१. स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥

पृष्ठ ३११.

१. यस्त्वनुपपद्यमान उपायतामात्रेणार्थान्तरप्रतिपत्तिं कृत्वा पलायत इव स तिरस्कृत इति।

२. अत्यन्ततिरस्कृतवाच्यो यथादिकवेर्वाल्मीकेः ।
हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम् । अन्ध इति चोपहतदृष्टिः, जात्यन्धस्यापि गर्भे दृष्ट्युपघातात् । अन्धोऽयं पुरोऽपि न पश्यतीत्यतस्तत्र तिरस्कारो अन्धार्थस्य नत्वत्यन्तम् । इह त्वादर्शस्यान्धत्वमारोप्यमाणमपि न सह्यमिति अन्धशब्दोऽत्र पदार्थस्फुटीकरणाशक्तत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्शे लक्षणया प्रतिपादयति, असाधारणविच्छायत्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति ।

पृष्ठ ३१२.

१. असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥
मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा ।
स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशते कश्चित्क्रमेणेति द्विविधो मतः ।
क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः ।
शब्दार्थशक्तिमूलत्वात्सोऽपि द्वेधा व्यवस्थितः ॥ ध्व. ९४.
शब्दार्थशक्त्या वाक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः । ध्व. १०४.

२. यस्मादलङ्कारो न वस्तुमात्रं यस्मिन्काव्ये शब्दशक्त्या प्रकाशते स एव शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितः । वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेषः ।

पृष्ठ ३१४.

१. तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा तावद् भात्येव, न चान्यतः शब्दादिति सा ध्वननव्यापारात् ।

पृष्ठ ३१५.

१. अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥

२. इह तु पत्रदलगणनमधोमुखत्वं चान्यपरि कुमारीणां सम्भाव्यत इति झटिति न लज्जायां विश्रमयति हृदयमपि तु प्राग्वृत्ततपश्चर्यादिवृत्तान्तानुसरणेन तत्र प्रतिपत्तिं करोतीति क्रमव्यङ्ग्यतैव ।

३. व्यञ्जकमुखेनापि भेदः सर्वथैव न न प्रकाशितोऽधुना पुनः शुद्धव्यञ्जकमुखेन। तथाहि व्यङ्ग्यमुखप्रेक्षितया विना पदं वाक्यं वर्णाः पदभागः संघटना महावाक्यमिति स्वरूपत एव व्यञ्जकानां भेदः, न चैषामर्थवत्कदाचिदपि व्यङ्ग्यता सम्भवतीति व्यञ्जकैकनियतं स्वरूपं यत्तन्मुखेन भेदः प्रकाश्यत इति तात्पर्यम्।

पृष्ठ ३१६.

१. अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम्।

पृष्ठ ३१७.

१. विभक्त इति गुणालङ्काराणां वाच्यवाचकभावप्राणत्वात् अस्य च व्यङ्ग्यव्यञ्जकभावसारत्वान्नास्य तेष्वन्तर्भावः।

पृष्ठ ३१८.

१. यतो लक्षणकृतामेव स केवलं न प्रसिद्धः लक्ष्ये तु परीक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम् ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामः। यदप्युक्तम् कामनीयकमनतिवर्तमानस्य तस्योक्ताऽलङ्कारादिप्रकारेष्वन्तर्भावः इति तदप्यसमीचीनम्। यतो वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः, वाच्यवाचकचारुत्व हेतवो हि तस्याङ्गभूताः, न तु तदेकरूपा एवेति प्रतिपिपादयिष्यमाणत्वात्।

प्राधान्यं च यद्यपि इसौ न चकास्ति 'बुद्धौ तत्त्वावभासिन्याम्' इति नयेनाखण्डचर्वणविश्रान्तेः, तथापि विवेचकैर्जीवितान्वेषणे क्रियमाणे यदा व्यङ्ग्योऽर्थः पुनरपि वाच्यमेवानुप्राणयन्नास्ते तदा तदुपकरणत्वादेव तस्यालङ्कारता। ततो वाच्यादेवोपस्कृताच्चमत्कारलाभ इति। यद्यपि पर्यन्ते रसध्वनिरस्ति, तथापि मध्यकक्षानिविष्टोऽसौ व्यङ्ग्योऽर्थो न रसोन्मुखीभवति स्वातन्त्र्येणापि तु वाच्यमेवार्थं संस्कर्तुं धावतीति गुणीभूतव्यङ्ग्यतोक्ता।

पृष्ठ ३२०.

१. चन्द्रिकाकारस्तु·········इत्यलं पूर्ववंश्यैः सह विवादेन बहुना।

पृष्ठ ३२१.

१. द्वितीयपक्षपरिग्रहे पुनर्ध्वनेरेव लक्षणमनया भङ्ग्याभिहितं भवति, अभिन्नत्वाद्वस्तुनः।

पृष्ठ ३२२.

१. श्रीधैर्यस्याङ्गभुवा महाकवेः श्यामलकशिष्येण ।
   व्यक्तिविवेको विदधे राजानकमहिमकेनायम् ॥
२. आधातुं व्युत्पत्तिं सम्पूर्णां क्षेमयोगभाजानाम् ।
   सत्सु प्रथितनयानां भीमस्याभिमतगुणस्य तनयानाम् ।
३. छात्राभ्यर्थनया ततोद्य सहसैवोत्सृज्य मार्गं सतां
   पौरोभाग्यमभाग्यभाजनजनासेव्यं मयाङ्गीकृतम् ॥
   स्वकृतिष्वनियन्त्रितः कथमनुशिष्यादन्यमयमिति न वाच्यम् ।
   वारयति भिषगपथ्यादितरान्स्वयमाचरन्नपि तत् ।
४. अयं महिमभट्टाचार्यः परमाहङ्कारी स्वसमक्षमन्यान् तृणाय मन्वानः उद्दण्ड॰
   तया क्वापि समादरमलभत् ।
५. सहसा यशोऽभिसर्तुं समुद्यताऽदृष्टदर्पणा मम धीः ।
६. युक्तोऽयमात्मसदृशान्प्रति मे प्रयत्नो
   नास्त्येव तज्जगति सर्वमनोहरं यत् ।
   केचिज्ज्वलन्ति विकसन्त्यपरे निमील-
   न्त्यन्ये यदभ्युदयभाजि जगत्प्रदीपे ॥

पृष्ठ ३२३.

१. ध्वनिवर्त्मन्यतिगहने स्खलितं वाण्याः पदे पदे सुलभम् ।
   रभसेन यत्प्रवृत्ता प्रकाशकं चन्द्रिकाद्यदृष्ट्वैव ॥
२. किन्तु तदवधीर्यैर्गुणलेशो सततमवहितैर्भाव्यम् ।
३. अत एव 'कुन्तकेन' इति ख्यातस्याप्युल्लुण्ठवचनम् ।
४. अतश्च 'अथैतद्दोषभयात्' इत्यादिना यो धूलिप्रक्षेपः कृतः स स्वमनीषिकया
   शङ्कितपरदूषणप्रयत्नो निरस्थान एव ।

पृष्ठ ३२४.

१. इह सम्प्रतिपत्तितोऽन्यथा वा ध्वनिकारस्य वचोविवेचनं नः ।

पृष्ठ ३२६.

१. तथा हि घटादिशब्दाः स्वार्थे प्रवर्तमाना घटनादिक्रियामेवान्वयव्यतिरेकाभ्यां
   प्रवृत्तिनिमित्तभावेनावलम्बमाना दृश्यन्ते । न घटत्वादिसामान्यम् ।······
   न च सत्यपि घटत्वसामान्ये स्वयमघटन् घटात्मतामनापद्यमान एवासौ घट-
   व्यपदेशविषयो भवितुमर्हति । एवं हि पटोऽपि घटव्यपदेशविषयः स्यात् ।

पृष्ठ ३२८.

१. इह खलु घटादीनां पदार्थानां बहिः सिद्धावपि प्रमातर्यसिद्धावसिद्धिरेव । बहिः सत्तामात्रेणासत्कल्पेन व्यवहर्तॄणां व्यवहारासिद्धेः । प्रतिपत्तरि सिद्धिः प्रकाश एव ।.........

पृष्ठ ३३१

१. यः कश्चिदर्थः शब्दानां व्युत्पत्तौ स्यान्निबन्धनम् ।
प्रवृत्तौ तु क्रियैवैका सत्तासादनलक्षणा ॥

२. सत्तायां व्याप्तिश्चैषा चिन्मयत्वपरिनिष्ठितेः ।
सङ्गच्छते जडस्यापि

पृष्ठ ३३२.

१. उपमानादीनां तत्रैवान्तर्भावात् ।

२. अर्थापत्तेरनुमानान्तर्भावाभ्युपगमात् ।

पृष्ठ ३३३.

१. एतेन शाब्दं व्याख्यातम् ।

२. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ।

पृष्ठ ३३४.

१. एवञ्चान्तर्मात्रविपरिवर्तितया सिद्धसद्भावानां घटादीनां घटादिशब्दाः अपि द्योतका एव स्युर्न वाचकाः इति वाच्यवाचकव्यवहारोऽस्तमियात् ।

पृष्ठ ३३५.

१. न च रसादिष्वपि विभावादिप्रकाशनसहभावेन प्रकाशनमुपपद्यते । यतस्तैरेव कारणादिभिः कृत्रिमैर्विभावाद्यभिधानैरसन्त एव रत्यादयः प्रतिबिम्बकल्पाः स्थायिभावव्यपदेशभाजः कविभिः प्रतिपत्तृप्रतीतिपथमुपनीयमानाः हृदयसंवादादास्वाद्यत्वमुपनयन्तः सन्तो रसा इत्युच्यन्ते । न च कारणादिभिः कार्यादयः प्रतिबिम्बकल्पाः सहैव प्रकाशितुमुत्सहन्ते ।

पृष्ठ ३३६.

१. यत्तु भावाध्याये स्थायिनां लक्षणमुक्तं तद् व्यभिचारिदशापन्नानामेव तेषामवगन्तव्यं नान्येषाम्, लक्षणवचनस्य वैयर्थ्यप्रसङ्गात् । स्थाय्यनुकरणात्मानो हि रसा इष्यन्ते, ते च प्रधानमिति लक्षणमुखेनैव तेषां स्वरूपावगमसिद्धेः, तेषां बिम्बप्रतिबिम्बभावेनावस्थानात् ।

पृष्ठ ३३७.

१. तेनात्र गम्यगमकयोः सचेतसां सत्यासत्यविचारो निरुपयोग एव । काव्यविषये च वाच्यव्यङ्ग्यप्रतीतीनां सत्यासत्यविचारो निरुपयोग एव ।

पृष्ठ ३३८.

१. यत्र विभावादिमुखेन भावानामवगमस्तत्रैव सहृदयैकसंवेद्यो रसास्वादोदय इति वस्तुस्वभाव एवायं न पर्यनुयोगपदवीमवतरति प्रामाणिकानाम् ।

२. भ्रान्तिरपि सम्बन्धतः प्रमा ।
भ्रान्तिरपि भ्रमात्मकं ज्ञानमपि, सम्बन्धतः प्रमा प्रमाणम् , अर्थक्रियाकारिणीति यावत् भवति । यथा 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति भावः ।

पृष्ठ ३३९.

१. सहृदयैकसंवेद्यो रसास्वादोदयः ।

२. भावसंयोजनाव्यङ्ग्यपरसंवित्तिगोचरः ।
आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते ॥

३. उपचारस्य प्रयोजनं सचेतनचमत्कारित्वं नाम । तद्धि मुख्ये चित्रपुस्तकादौ व्यक्तिविषये परिदृष्टमेव ।

४. 'चित्रपुस्तकादौ' इति । आलेख्यलेख्यादौ सन्तमसावस्थिते प्रदीपादिना प्रकाशिते झटित्यद्भुतार्थप्रकाशनाच्चमत्कारो जायते । तद्वद्रसादौ ।
( इति व्यक्तिविवेकव्याख्याने पृ. ५३. )

पृष्ठ ३४०.

१. प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।
सम्प्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥
न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।
प्रणीतो गुरुणास्माकमयमागमसंग्रहः ।
काण्डे तृतीये न्यक्षेण भविष्यति विचारणा ।

पृष्ठ ३४१.

१. विद्वज्जनानां यः खलु सर्वत्र गीयते ।
तत उपसृत्य विरचिता राजानकरूय्यकनाम्ना वै ।

अभ्युपगम्यन्ते वा, नियोगतोऽभिधाशक्तिपूर्वकत्वेनेतरशक्तिप्रवृत्तिदर्शनात्। तस्माद्भिन्नाश्रया एव ता न शब्दैकसमाश्रया इत्यवसेयम्।

२. यश्चासावाश्रयो भिन्नः सोऽर्थ एवेति तद्व्यापारस्यानुमानान्तर्भावोऽभ्युपगन्तव्य एव।

३. नह्युन्मत्तः कश्चित् क्वचित् कथञ्चित् साधर्म्यमनुत्पश्यन्नेवाकस्मात् तत्त्वमारोपयतीति परिशीलितवक्तृस्वरूपः प्रतिपत्ता तत्त्वारोपनिमित्तं सादृश्यमात्रमेव प्रतिपत्तुमर्हति न तत्त्वम्।

पृष्ठ ३५३.

१. तद्धि वाच्यत्वयोपक्रम एव भासते, न प्रतीतिपर्यवसानास्पदं भवितुमर्हति। तस्य बाधोपपत्तेः। तस्य चैवंविधस्योपक्रमस्य निमित्तं साधर्म्यमात्रप्रतिपादनम्। प्रयोजनञ्च लाघवेन वाहीकादौ गवादिगतजाड्यादिधर्मप्रतिपादनं यस्मादतिदेशप्रकारोयमर्थान्तरे शब्दविनिवेशो नाम। यदुक्तम्:—
जातिशब्दोऽन्तरेणापि जातिं यत्र प्रयुज्यते।
सम्बन्धिसदृशाद्धर्मात्तं गौणमपरे विदुः॥

पृष्ठ ३५४.

१. न च वदतेः प्रकाशो वाच्य इति शक्यं वक्तुं तस्य तत्रासमितत्वात् प्रकाशस्य चातत्त्वात्। न चायं स्वार्थमेव प्रतिपादयति तस्य बाधोपपत्तेः।

पृष्ठ ३५५.

१. स हि तत्साम्यतत्सामीप्यादिनिबन्धनत्वाद्बहुविधः।

२. गुणवृत्तौ गिरां यावत्सामग्रीष्टा निबन्धनम्।
सैव लिङ्गतयास्माभिरिष्यतेऽर्थान्तरं प्रति॥

३. यच्च निमित्तं तदेवास्माभिरिह लिङ्गमित्याख्यातम्। युक्तञ्चैतत्। शब्दस्य तत्र व्यापाराभावात्। व्यापाराभावश्च सम्बन्धाभावात्। लिङ्गाच्च लिङ्गिनः प्रतीतिरनुमानमेवेति न गुणवृत्तावर्थान्तरप्रतीतिः शाब्दी।

पृष्ठ ३५६.

१. विषं भक्षय मा चास्य गृहे भुङ्क्थाः इत्यादावपि यदेतद्विषभक्षणानुज्ञानं तदर्थप्रकरणादिसहायमेतद्गृहे भोजनस्य ततोऽपि दारुणतरपरिणामत्वमनुमापयति·········

अवगतवक्तृप्रकरणादिस्वरूपः प्रतिपत्ता विषभक्षणानुज्ञानादेव तद्गृहे भोजनस्यात्यन्तमकरणीयत्वमनुमातुमर्हति।

पृष्ठ ३५७.

१. सतोऽसत एव वार्थस्य प्रकाशमानस्य सम्बन्धस्मरणानवेक्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरभिव्यक्तिरिति तल्लक्षणमाचक्षते ।

पृष्ठ ३५८.

१. न चैतल्लक्षणं वाच्ये संगच्छते । तथा हि—सतोऽभिव्यक्तिराद्ययोरर्थयोर्लक्षणम्, न तत् प्रतीयमानेष्वेकमपि संस्प्रष्टुं क्षमते, तस्य दध्यादेरिवेन्द्रियविषयभावापत्तिप्रसंगात्, घटादेरिव वाच्यार्थसहभावेनेदम्तामतीतेरसंभवात् । न च स्वरूपासंस्पर्शि लक्षणं भवति । तृतीयस्यास्तु यल्लक्षणं तदनुमानस्यैव संगच्छते न व्यक्तेः ।

२. न च वाच्यादर्थादर्थान्तरस्य प्रतीतिरविनाभावसंबन्धस्मरणमन्तरेण संभवति, सर्वस्यापि तत्प्रतीतिप्रसंगात् । नापि सहभावेन धूमाग्निप्रतीत्योरिव तत्प्रतीत्योरपि क्रमभावस्यैव संवेदनादित्यसम्भवो लक्षणदोषः ।

पृष्ठ ३५९.

१. अथ रसाद्यपेक्षया तयोः सहभावेन प्रकाशोऽभिमत इत्युच्यते, अव्याप्तिस्तर्हि लक्षणदोषः, वस्तुमात्रालङ्कारप्रकाशस्य प्रकाशकासहभावेनाव्याप्तेः । न च रसादिष्वपि विभावादिप्रकाशनसहभावेन प्रकाशनमुपपद्यते ।

२. द्विविधो हि प्रकाशकोऽर्थः उपाधिरूपः स्वतन्त्रश्चेति । तत्र शब्दज्ञानप्रदीपादिरुपाधिरूपः । ·········अन्यः स्वतन्त्रो धूमादिः । तत्राद्यस्तावद् भवद्भिर्नाभ्युपगन्तव्य एव, प्रत्यक्षाभिधेययोरेवशब्दार्थयोः काव्यतापत्तिप्रसङ्गात् ।

पृष्ठ ३६०.

१. अन्यस्य तु लिङ्गत्वमेवोपपद्यते न व्यञ्जकत्वम् ।

२. न च त्रिविधस्यापि व्यङ्ग्याभिमतस्यार्थस्य प्रकाशकसहभावेन प्रकाशस्तस्यापि ध्वनिकारस्याभिमतः ।

३. अथैतद्दोषभयात् सहभावानपेक्षमेतल्लक्षणमुच्यते तथाप्यनुमानेऽतिव्याप्तिः । तत्राप्युपसर्जनीकृतात्मना धूमादिना प्रकाश्यस्य प्रकाशोऽस्त्येव ।

पृष्ठ ३६१.

१. किञ्च यत्र वाच्यस्यार्थस्य व्यञ्जकत्वं स चेद्ध्वनिस्तर्हि तदनुमितस्य व्यञ्जकत्वे ध्वनित्वं न स्यात्, तस्य वाच्यत्वाभावात् ।

२. तत्र व्यक्तिवादिना घटदीपन्यायेन सद्विषया व्यक्तिरङ्गीकृता । यथा च न दोषस्तथोपपादितम् ।

३. तत्र व्यक्तिवादिनो व्यङ्ग्यत्वाभ्युपगमेऽयमभिप्रायः············

पृष्ठ ३६२.

१. अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तदः पुंस्त्वम् ।
द्विवचनवाशब्दौ च व्यक्तिर्ध्वनिनाम काव्यवैशिष्ट्यम् ॥
वचनञ्च कथनकर्तुः कथिता ध्वनिलक्षणीति दश दोषाः ।
ये त्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः ॥

पृष्ठ ३६३.

१. यत्पुनरस्य क्वचित् समासोक्त्यादौ प्राधान्यमुच्यते तत् प्राकरणिकत्वापेक्षयैव न प्रतीयमानापेक्षया.........व्यभिचारेऽपि वैफल्यादनुपादेयमेव ।

पृष्ठ ३६४.

१. वाच्यस्य प्रतीयमानापेक्षया चारुत्वनिमित्तं प्राधान्यं व्यभिचारेः । तत्र सत्यपि तस्य व्यावृत्त्यर्थं विशेषणमयुक्तं निष्फलत्वात्, यतो यत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वं तदिह व्यावर्तनीयम् । न च तत्र वाच्यस्यैव चारुत्वमिति नियमः, व्यङ्ग्यस्यापि प्रकृष्टचारुत्वदर्शनात् ।

२. अत्र व्यक्तिवादिनोऽयमभिप्रायः—यदेतदर्थस्य गुणीकृतात्मत्वं तदर्थान्तरप्रत्यायकत्वेनोपायत्वादप्राधान्यम्, प्रतीयमानापेक्षया अचारुत्वम्, [1]विश्रान्तत्वेनार्थान्तरानुपकार्यत्वञ्चेति त्रयः पक्षाः सम्भवन्ति । तत्राद्यं पक्षद्वयमनूद्य कामं दूषितम् ।............तृतीयस्तु पक्षो गुणीभूतव्यङ्ग्यनिरासाय सिद्धान्तितः । तथा हि समासोक्त्यादौ प्रतीयमानोऽर्थो वाच्यार्थोपयिकोऽपि न स्वात्मनि विश्रान्तिं भजते, प्रत्यावृत्य वाच्यार्थोपस्काराय प्रवृत्तत्वात्...... ततश्च गुणीभूतव्यङ्ग्ये वाच्यस्य स्वविश्रान्तत्वेनार्थान्तरोपकार्यत्वं व्यावर्त्यमिति विशेषणमुपपन्नम् ।

पृष्ठ ३६५.

१. किन्तु तमर्थमिति तच्छब्देनानन्तर्यात् प्रतीयमानस्यार्थस्य परामर्शे सति पारिशेष्याद् 'अर्थो वाच्यविशेष' इति स्वयं विवृतत्वाच्च अर्थशब्दो वाच्यविषय एव विज्ञायते नोभयार्थविषय इति तदवस्थो दोषः ।

२. शब्दः पुनरनुपादेय एव तस्य स्वार्थाऽभिधानमन्तरेण व्यापारान्तरानुपपत्तेरुपपादयिष्यमाणत्वात् । न च तस्यानुकरणव्यतिरेकेणोपसर्जनीकृतार्थत्वं सम्भवति ।

---

1. The text, as found in the Chowkhamba edition, is corrupt. It does not fit in with what follows. Could it have been 'अविश्रान्तत्वेनार्थान्तरोपकारित्वञ्च' ?

पृष्ठ ३६६.

१. कुतस्तर्हि तदर्थावगतिः । अनुकार्यादिति ब्रूमः । तस्य सार्थकनिरर्थकत्वभेदेन द्वैविध्यतः । न त्वनुकरणात्, तस्येतिना व्यवच्छिन्नस्य स्वरूपमात्रेऽवस्थानात् । अन्यस्य तूपसर्जनीभावाऽव्यभिचार एव ।

पृष्ठ ३६७.

१. व्यभिचारसम्भवयोरपि वा यत्स्वार्थयोरुपसर्जनीकृतत्ववचनं तत्पुनरुक्तम्, तयोरर्थान्तराभिव्यक्त्यर्थमुपात्तयोस्सामर्थ्यादेव तदवगतेरित्युक्तम् । न च स्वरूपमात्रानुवादफलमेतदिति शक्यं वक्तुम् । तस्य पुनरुक्तिप्रकारस्योपपादनतः ।

२. एवञ्च यत्सुवर्णपुष्पां पृथिवीमित्युदाहरणमुपदर्शितं तदसिद्धसाध्यसाधनधर्मानुगमित्यवगन्तव्यम् ।

३. व्यक्तिवादिनः पुनर्मते शब्दस्य शक्त्यन्तरसमर्थनात् स्वरूपेणोपादानस्य सार्थकत्वं विवदयते । तस्य चोपसर्जनीकृतार्थत्वं विशेषणं सप्रयोजनमेव । तथाहि दृष्टया केशव गोपरागहृतया इत्यादौ············

पृष्ठ ३६८.

१. शब्दस्य च विशेषणमनुपादेयमेव स्याद्, अर्थस्य विशिष्टत्वेनैव तदवगतिसिद्धेः ।

२. किञ्च तमिति तदः पुंस्त्वेन निर्देशोऽनुपपन्नः । तस्यानन्तरप्रक्रान्तार्थपरामर्शिनस्तल्लिङ्गतापत्तेः । न चात्र तल्लिङ्गताविशिष्टः कश्चिदर्थः प्रक्रान्तः । वस्तुतो नपुंसकलिङ्गस्यानन्तरं प्रक्रान्तत्वात् ।

पृष्ठ ३६९.

१. व्यङ्क्तः इति द्विवचनेनेदमाह·········

'अर्थः शब्दो वेति तु विकल्पाभिधानं प्राधान्याभिप्रायेण' इति यदाहुस्तद्भ्रान्तिमात्रमूलम् ।

२. किञ्च वाशब्दो विकल्पार्थो वा स्यात् समुच्चयार्थो वा । न तावद्विकल्पार्थः, पक्षान्तरासम्भवस्य व्युत्पादितत्वात् । सम्भवे वास्य द्विवचनानुपपत्तिः, तयोः समुच्चयाभावात्············

समुच्चयार्थत्वे यत्र शब्दार्थयोरेकैकस्य व्यञ्जकत्वं तत्र ध्वनित्वमिष्टं न स्यात् ।

पृष्ठ ३७०.

१. नापि शब्दस्याभिधातिरेकेण व्यञ्जकत्वं व्यापारान्तरमुपपद्यते, येनार्थान्तरं प्रत्याययेत्, व्यक्तेरनुपपत्तेः सम्बन्धान्तरस्य चासिद्धेः । तदभावेऽपि तद-

भ्युपगमे तस्यार्थनियमो न स्यात्, निबन्धनाभावात्। न ह्यस्य गेयस्येव रत्यादिभिर्भावैः स्वाभाविक एव सम्बन्धः, सर्वस्यैव तत्प्रतीतिप्रसंगात्।

२. नापि समयकृतः व्यञ्जकत्वस्यौपाधिकत्वात् उपाधीनाञ्चार्थप्रकरणादिसामग्रीरूपाणामानन्त्यादनियतत्वाच्च प्रतिपदमिव शब्दानुशासनस्य समयस्य कर्तुमशक्यत्वात्।

३. नचानयोरन्यः सम्बन्धः संभवतीति तस्याः सामग्र्या एव संबन्धबलात् तद्व्यञ्जकत्वमुपपन्नं न शब्दस्येति नार्थपक्षादस्य कश्चिद्विशेषः इति व्यर्थस्तत्पक्षोपन्यासः।

## पृष्ठ ३७१.

१. ननु यदि शब्दस्यार्थनिरपेक्षस्य व्यञ्जकत्वं नेष्यते तत्कथं प्राप्तमित्यादौ प्रादीनां द्योतकत्वमुक्तं न वाचकत्वम्।.........उक्तम्, उपचारतो न परमार्थतः इति। तस्य प्रदीपादिनिष्ठस्य वास्तवस्य शब्दार्थविषयत्वस्य प्रतिक्षेपात्।

२. तस्माद् भाक्तमेव द्योतकत्वमुपगन्तव्यं न मुख्यम्। भक्तेश्च प्रयोजनं वाच्यार्थस्य स्फुटत्वप्रतिपत्तिः। निमित्तं च विशेषणविशेष्यप्रतीत्योराशुभावितया क्रमानुपलक्षणात् सहभावप्रतीतिः।

३. व्यक्तशब्दानां तथाश्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाभिव्यञ्जकाः ते ध्वनिशब्देनोक्ता यथाह भगवान्स एवः—
प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥

## पृष्ठ ३७२.

१. अत एव श्रूयमाणानां शब्दानां ध्वनिव्यपदेश्यानामन्तःसन्निवेशिनश्च स्फोटाभिमतस्यार्थस्य व्यङ्ग्यव्यञ्जकभावो न सम्भवतीति व्यञ्जकत्वसाम्याद्यः शब्दार्थात्मनि काव्ये ध्वनिव्यपदेशः सोप्यनुपपन्नः। तत्रापि कार्यकारणमूलस्य गम्यगमकभावस्योपगमात्।

२. इत्थञ्च काव्यस्य विशिष्टतानुपपत्तावितरतल्लक्षणविधायिमतातिरिक्तं न किञ्चिदनेनाभिहितं स्याद्, अन्यत्र ध्वनिव्यपदेशमात्रात्।

## पृष्ठ ३७३.

१. न च रसानां वैशिष्ट्ये तदात्मनः काव्यस्य विशिष्टत्वमिति युक्तं वक्तुम्, अव्याप्तेः। एवं हि प्रतिनियतरसात्मन एव तस्य ध्वनित्वं स्यात्, नान्यरसात्मनः वैशिष्ट्याभावात्। इष्यते च तत्रापीत्यव्याप्तिर्लक्षणदोषः।

पृष्ठ ३७४.

१. अत एव च न गुणालङ्कारसंस्कृतशब्दार्थशरीरं तावत्काव्यम्, तस्य यथोक्तव्यङ्ग्यार्थोपनिबन्धे सति विशिष्टत्वमिति शक्यं वक्तुम्। तस्य रसात्मताभावे मुख्यवृत्त्या काव्यव्यपदेश एव न स्यात् किमुत विशिष्टत्वम्।

२. नच रसात्मनः काव्यस्य वस्तुमात्रादिभिर्विशेषः शक्य आधातुम्। तेषां विभावादिरूपतया रसाभिव्यक्तिहेतुत्वोपगमात्। न च व्यञ्जकानां वैचित्र्ये व्यङ्ग्यस्य विशेषोऽभ्युपगन्तुं युक्तः शावलेयादीनामिव गोत्वस्य।

३. ततोऽस्य विशिष्टतोपगमे वा यत्र तयोरुभयोरेकैकस्य वा व्यङ्ग्यता तत्रैव ध्वनिव्यपदेशः स्यात्, न केवलरसात्मनि काव्ये, वैशिष्ट्याभावात्। इष्यते चासौ तत्रापि। प्रहेलिकादौ च नीरसे स्यात्। तत्राप्युक्तक्रमेण वस्तुमात्रादेरभिव्यङ्ग्यत्वेनेष्टत्वात्।

पृष्ठ ३७५.

१. न च तस्य तदङ्गभावो भणितुं युज्यते अङ्गित्वेनेष्टत्वात्। इति काव्यत्वमेव ध्वनिव्यपदेशविषयोऽभ्युपगन्तुं युक्तो न तद्विशेषः।

पृष्ठ ३७६.

१. अत्र व्यक्तिवादिनस्त्वयमाशयः—इह प्रसिद्धं लक्ष्यमाश्रित्य लक्षणं प्रवर्तते। लक्ष्ये च द्विविधं काव्यं दृश्यते, मुख्यं गौणञ्च। तत्र मुख्यं यत्र व्यङ्ग्यस्य प्राधान्यम्, शिष्टं गुणीभूतव्यङ्ग्यादि गौणम्। उभयञ्च प्राज्ञमनादिकालव्यवहारसिद्धत्वात्............तत्र च गुणीभूतव्यङ्ग्यनिरासाय विशेषणग्रहणं कर्तव्यम्।

२. किञ्च 'सूरिभिः कथितः' इति कथनक्रियाकर्तृनिर्देशः पक्षद्वयेऽप्यवाच्य एव।

पृष्ठ ३७७.

१. किञ्च यथाभिधेयोऽर्थस्तद्विशेषणञ्चोपात्तं तद्वदभिधाप्युपादानमर्हति। अन्यथा यत्र दीपकाद्यलंकारादलङ्कारान्तरस्योपमादेः प्रतीतिस्तत्र ध्वनित्वमिष्टं न स्यात्तल्लक्षणेनाव्याप्तेः। अलङ्काराणाञ्चाभिधात्वमुपगतं तेषां भङ्गिभणितिभेदरूपत्वात्।.........

पृष्ठ ३७८.

१. अत्र व्यक्तिवादिनोऽयमाशयः। इह चिरन्तनैरलङ्कारप्रजापतिभिः भट्टोद्भटप्रभृतिभिः शब्दार्थधर्मा एवालङ्काराः प्रतिपादिताः नाभिधाधर्माः। यतोऽर्थप्रतिपत्त्युद्देश्यः शब्दव्यापारः शब्दोच्चारणव्यापारो वाऽभिधा............ ततश्च तन्मताश्रयणेन शब्दार्थयोर्व्यञ्जकत्वमुच्यमानं तद्धर्माणामलङ्काराणामपि पर्यवसितमिति तत्स्वीकारार्थं पृथगभिधानग्रहणे न किञ्चित्।

पृष्ठ ३७९.

१. अपरं पुनर्बहिरङ्गं बहुप्रकारं सम्भवति तद्यथा—

२. पूर्वैरेवंविधदोषोद्भावनरूपस्य विचारस्य प्रणीतत्वात् ।

३. अत्र ह्यसंरब्धवानिति नञ्समासस्तावदनुपपन्नः ।

पृष्ठ ३८०.

१. प्रक्रमभेदोऽपि शब्दानौचित्यमेव । स हि यथाप्रक्रममेकरसप्रवृत्तायाः प्रतिपत्तृप्रतीतेरुत्खात इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यति ।

पृष्ठ ३८१.

१. वाच्यस्यावचनं यथा 'कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी' इति । अत्र हि भ्रान्तौ निवृत्तायां तद्विषयभूतयोः सुरधनुर्धारासारयोरिव विद्युतोऽपीदमा परामर्शे वाच्ये यत्तस्यावचनं स वाच्यावचनं दोषः ।

२. तेन ध्वनिवदेषा वक्रोक्तिरनुमा न किम् ।

३. अर्थशक्तिमूलः पुनरुपपद्यत एव ।

४. ये त्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः ।

पृष्ठ ३८२.

१. आद्ययोस्तु क्रमस्य सुलक्षत्वाद् भ्रान्तिरपि नास्तीति निर्निबन्धन एव तत्र व्यङ्ग्यव्यपदेशग्रहः ।

२. यत्तु तदनाख्यायैव तयोः प्रधानेतरभावेन प्रकारद्वयमुक्तं तदप्रयोजकमेव······ न हि तयोः सामान्यविशेषयोस्त्रिष्वपि वस्तुमात्रादिष्वनुमेयेषु चेतनचमत्कारकारी कश्चिद्विशेषोऽवगम्यते ।

३. किञ्च यदविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति ध्वनेः प्रकारद्वयमुक्तम्, तत्र किमिदमविवक्षितत्वं नामेति तात्पर्यतोऽस्यार्थो वक्तव्यः ।
············कथमस्य ध्वनिप्रकारत्वोक्तिर्युक्तिमती । ·················
यद्वाच्यस्य विवक्षितत्वमन्यपरत्वञ्चोपगतं तद्विप्रतिषिद्धं विवक्षितान्यपरत्वयोर्विरोधात् ।

४. अर्थान्तरसंक्रमितवाच्योऽप्यनुमान एवान्तर्भवति । ·········अत्यन्ततिरस्कृतवाच्यस्तु पदार्थोपचार एव यथा गौर्वाहीक इति । तस्याप्यनुमानान्तर्भावः समर्थित एव ।

५. शब्दशक्तिमूलाया अर्थान्तरप्रतीतेरनिबन्धनायाः पराकृतत्वान्न तन्मूला पदवाक्यप्रकाशता सम्भवति ।

पृष्ठ ३८३.

१. प्रक्रमभेदनियमं प्रतीति तु पाठे।

पृष्ठ ३८४.

१. नाटकमीमांसायां साहित्यमीमांसायां च तेषु तेषु स्थानेषु प्रपञ्चः प्रदर्शितः।
२. एतदस्माभिर्हर्षचरितवार्तिके विस्तृत्य प्रतिपादितम्।
३. अस्माभिश्चैतत्प्रपञ्चो बृहत्यां करिष्यते।

पृष्ठ ३८८.

१. विरोधिरससंबन्धिविभावादिपरिग्रहः।
विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम्॥
अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्।
परिपोषं गतस्यापि पौनःपुन्येन दीपनम्॥
रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च।

प्रस्तुतरसापेक्षया विरोधी यो रसस्तस्य संबन्धिनां विभावानुभावव्यभिचारिणां परिग्रहो रसविरोधहेतुरेकः संभवनीयः। तत्र विरोधिरसविभावपरिग्रहो यथा शान्तरसनिभावेषु तद्विभावतयैव निरूपितेष्वनन्तरमेव शृङ्गारादिवर्णने। विरोधिरसभावपरिग्रहो यथा प्रियं प्रति प्रणयकलहकुपितासु कामिनीषु वैराग्यकथाभिरनुनये। विरोधिरसानुभावपरिग्रहो यथा प्रणयकुपितायां प्रियायामप्रसीदन्त्यां नायकस्य कोपावेशविवशस्य रौद्रानुभाववर्णने। अयं चान्यो रसभङ्गहेतुर्यत्प्रस्तुतरसापेक्षया वस्तुनोऽन्यस्य कथञ्चिदन्वितस्यापि विस्तरेण कथनम्। यथा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद्वर्णयितुमुपक्रान्तस्य कवेर्यमकाद्यलङ्कारनिबन्धनरसिकतया महता प्रबन्धेन पर्वतादिवर्णने। अयं चापरो रसभङ्गहेतुरवगन्तव्यो यदकाण्ड एव विच्छित्तिः रसस्याकाण्डे च प्रथनम्। तत्रानवसरे विरामो यथा नायकस्य कस्यचित्स्पृहणीयसमागमया नायिकया कयाचित्परां परिपोषपदवीं प्राप्ते शृङ्गारे विदिते च परस्परानुरागे समागमोपायचिन्तोचितं व्यवहारमुत्सृज्य स्वतन्त्रतया व्यापारान्तरवर्णने।

पृष्ठ ३८९.

१. अनवसरे च प्रकाशनं यथा प्रवृत्ते प्रवृद्धविविधवीरसंक्षये कल्पसंक्षयकल्पे सङ्ग्रामे देवप्रायस्यापि तावन्नायकस्यानुपक्रान्तविप्रलम्भशृङ्गारस्य निमित्तमुचितमन्तरेणैव शृङ्गारकथायामवतारवर्णने।

पृष्ठ ३९२.

१. तस्य शास्त्रं शासनं वाद्यभाण्डनाट्यादिवैलक्षण्येन सम्यक्तत्स्वरूपावगमोपायम् ।

२. किन्तु प्रथमनाट्यावसरक्रमप्रवृत्तविरिञ्चिवचनप्रवर्तकभरतमुनिशासमानुवर्तिशिष्यपरम्परापरिचयागताधुननकालावधिमहानटजनस्वकप्रवृत्तिविशेषोपदेशपरम् ।

पृष्ठ ३९३.

१. तावन्नानेन किञ्चिदुपदिश्यते तं प्रत्युपकाराद्दते ।

पृष्ठ ३९५.

१. यद्बलादेव पुमर्थोपायावगतिं करोति ।

पृष्ठ ३९७.

१. इतिवृत्तस्य विन्दुसूत्रस्यूतस्य प्रारम्भाद्यवस्थापञ्चकचारिणो यदा प्रारम्भाद्यवस्था पूर्णत्वमेति तदाङ्कच्छेदो वि दुद्वारानुसन्धीयमानद्वितीयाङ्काभिधेयरूपो विधेयः । एवं प्रयत्नाद्यवस्थाचतुष्टयेऽपि ।

२. मुहूर्तः द्वादशक्षणात्मके काले, त्रिंशत्कलात्मके काले,
दण्डद्वयात्मके काले, मुहूर्तं घटिकाद्वयमित्युक्तेः ।
अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः ।
द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः ॥
द्वौ लवौ क्षण इत्युक्तः काष्ठा प्रोक्ता दशक्षणाः ।
त्रिंशत्काष्ठा कला प्रोक्ता कलात्रिंशन्मुहूर्तकः ॥

३. अंकस्य प्रयोगकालपरिमाणमियदिति दर्शयति एकदिवसप्रवृत्तम् इति ।......
एकदिवसेनेति मुहूर्तपञ्चकेनैव, यतस्तावन्तं कालमावश्यकानि भोजनादीनि शक्यनिरोधानि । ततः परं प्रयोगकालश्चेत् तत्प्रेक्षकप्रयोक्तॄणां तदाप्यावश्यकस्य सन्ध्यावन्दनभोजनादेरविरोधेनेत्येवं कार्यानेकत्वमेकत्राङ्के निषिद्धम् ।

४. दिवसावसानकार्यमिति । दिवसे अवसानं समाप्तिर्यस्य तत्सर्वं कार्यं यद्यङ्के प्रत्यक्षेण प्रदर्शयितुं न युज्यते, तदाङ्कच्छेदं कृत्वा प्रवेशकैर्दर्शनीयम् । अदृष्टमप्यर्थं हृदि प्रवेशयन्तीति ।

पृष्ठ ३९८.

१. अंकच्छेदं कुर्यान्मासकृतं वर्षसंचितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥
यत्र हि यत्तनिष्पाद्यं संचितं तदेव वर्षं गण्यते ।

२. यः कश्चित्कार्यवशात् गच्छति पुरुषः प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत् तज्ज्ञैः ॥
डिमादिनायकस्य तु दिव्यस्य आकाशयानकादिना सर्वं युज्यते ।

( अभि० भा० )

पृष्ठ ४०४.

१. *पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम् ।*

पृष्ठ ४०५.

१. अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥

पृष्ठ ४०८.

१. नटे तर्हि किम् ? आस्वादनोपायः । अत एव पात्रमित्युच्यते । नहि पात्रे मद्यास्वादः, अपि तु तदुपायकः ।

पृष्ठ ४१०.

१. महतः प्रधानभूतस्य फलस्य युज्यमानस्य तत्तन्नायकोचितस्य यद्बीजम् उपायसंपत्, तत्र यदौत्सुक्यमात्रं तद्विषयं स्मरणोत्कण्ठारूपमनेनोपायेनै-तत्सिद्ध्यतीति, तस्य बन्धो हृदये निरूढिः प्रारम्भः । स च नायकस्यामात्यस्य नायिकायाः प्रतिनायकस्य दैवस्य वा ।

पृष्ठ ४१२.

१. अपश्यत इति । तदुपायव्यतिरेकेण फलप्राप्तिमपश्यतः फलदर्शनं संभाव्यमानं विवेचयतः फलमुद्दिश्य यो व्यापार उपायविषयपरमौत्सुक्यगमनलक्षणस्तेन विनेदं फलं न भवति, तस्मात्स एव उपायोऽन्वेष्य इत्युपायविषयस्मरणेच्छासन्तानस्वभावः स प्रयत्नः ।

पृष्ठ ४१४.

१. उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः ।

पृष्ठ ४१८.

१. यथा रत्नावल्यां तृतीयेऽङ्के वेषपरिवर्ताभिसरणादौ समागमोपाये सति वासवदत्तालक्षणापायशङ्कायाः 'एवं जदि अआलवादाली विअ आअच्छिअ अण्णदो ण णइस्सेदि वासवदत्ता' इत्यादिना दर्शितत्वादनिर्धारितैकान्ता समागमप्राप्तिरुक्ता ।

२. अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता ।
अपायाभावादवधारितैकान्ता फलप्राप्तिर्नियताप्तिरिति ।

पृष्ठ ४२०.

१. समग्रफलसंपत्तिः फलयोगो यथोदितः ।
*यथा रत्नावल्यां रत्नावलीलाभचक्रवर्तित्वावाप्तिरिति ।*

२. तत्रार्थः फलम्, तस्य प्रकृतयः उपायाः, फलहेतव इत्यर्थः ।

पृष्ठ ४२३.

१. स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा ।
स्तोकोद्दिष्टः कार्यसाधकः पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषो बीजवद्बीजम् । यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुरनुकूलदैवो यौगन्धरायणव्यापारो विष्कम्भके न्यस्तः ।
यौगन्धरायणः, कः सन्देहः, द्वीपादन्यस्मात् इत्यादिना प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतावित्यन्तेन ।

२. अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम्,
यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ।
यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाऽङ्कः स्यादामुखाक्षेपसंश्रयः ॥

पृष्ठ ४२५.

१. अथ बिन्दुं लक्षयति प्रयोजनानां विच्छेद इति। प्रयुज्यते फलं यैरुपायानुष्ठानैः तेषाम्, इतिवृत्तवशादवश्यकर्तव्यताभिर्विच्छेदेऽपि सति यदनुसन्धानात्मकं प्रधाननायकगतं सन्धिद्रव्यज्ञानम् ।
बिन्दुर्ज्ञातविचारणं फललाभोपायत्वात् । यावदविच्छेदः प्रत्यनुसन्धानेन न कृतस्तावन्न किञ्चिदपि कार्यं निर्वहति.।

पृष्ठ ४२६.

१. एतदुक्तं भवति । सकलोपायप्रतिजागरणनिमित्तं ह्यनुसन्धानं यावद्धि मुख्यनायकेन प्रत्यनुसन्धानेन न क्रियते तावज्जडाजडरूपः सर्वोऽप्युपायोऽनुपायकल्प एव । तथाहि तापसवत्सराजे वासवदत्ताप्रेमातिशयानुसंधानं राजमुखेन प्रत्यङ्कं दर्शितम् ।

२. तत्र प्रधानसिद्धिरायत्तसिद्धिरुभयसिद्धिरिति । प्रधानसिद्धावयं बिन्दुः, आयत्तसिद्धिस्तु राज्यप्राप्तिलक्षणा, तस्याममात्यवर्गकृतमेवानुसन्धानं बिन्दुः, उभयसिद्धौ तु उभयकृतं येन यत्प्राधान्येनाऽभिसंहितं स एव तदनुसन्धत्ते ।

पृष्ठ ४२७.

१. इत्येवं प्रधानानुसन्धानचेतनव्यापारः कारणानुग्राही स्वयं च परमकारणत्व-

भावरतैलविन्दुवत् सर्वव्यापकत्वादपि विन्दुः बीजं च मुखसन्धेरेव प्रभृत्या-त्मानमुन्मेषयति ।

पृष्ठ ४२८.

१. यद्वृत्तं हि परार्थं स्यात् प्रधानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥
फलं संकल्प्यते सद्भिः परार्थं यस्य केवलम् ।
अनुबन्धेन हीनस्य प्रकरीं तां विनिर्दिशेत् ।
यस्य सम्बन्धि वृत्तं संविदनुसंधानं परस्य प्रयोजनसंपत्तये भवदपि स्वप्र-योजनं संपादयति, अत एवाह—प्रधानवच्च कल्प्येतेति । सचेतनानुसन्धाना पताकासिद्धिः प्रधानस्योपकारिणी । एवं सुग्रीवविभीषणप्रभृतिरपि रामा-दिनोऽर्थक्रियामारभमाणो रामादेरात्मनश्चोपकाराय प्रभवमाने प्रसिद्धिप्रा-दास्ये संपादयति इत्येवमौचित्यज्ञानोपयोगिन्या अस्याः पताकामात्रवदुपयो-गित्वादियं पताकेति चिरन्तनाः ।

२. फलं प्रकल्प्यते यस्या इति । यस्तथ ततः (?) परार्थमेव केवलं सर्वमनुतिष्ठति सा प्रकरी । यथा कृत्यारावणे कुलपतिः, वेणीसंहारे भगवान् वासुदेवः प्रकर्षेण स्वार्थानपेक्षया करोतीति ।

पृष्ठ ४२९.

१. पताकावृत्तमप्यूनमेकाद्यैरनुसन्धिभिः ।
अङ्गान्यत्र यथालाभमसन्धिं प्रकरीं न्यसेत् ॥

२. सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक् ।

३. प्राञ्चः प्रधाननायकपताकानायकप्रकरीनायकैश्चेतनरूपैः यद्वस्तु फलरूपं *प्रयुज्यते सम्पाद्यते सम्पाद्यत्वेनानुसन्धीयते तत्फलप्रयोजनो यः सम्पूर्णतादायी* पूर्वपरिगृहीतस्य प्रधानस्य बीजरूपोपायस्य फलमारभत इत्यारम्भशब्द-वाच्यो द्रव्यगुणक्रियाप्रभृतिः स सर्वोऽर्थः सहकारी कार्यमित्युच्यते । चेतनैः कार्यते फलमिति व्युत्पत्त्या । सम्यगिति, प्रभुमन्त्रोत्साहशक्तित्रयसम्पत्तै-रित्यर्थः । तेन जनपदकोशदुर्गादिकव्यापारवैचित्र्यं सामाद्युपायवर्गं इत्येत-त्सर्वं कार्येऽन्तर्भवति ।

पृष्ठ ४३०.

१. ननु प्रारम्भादिदशासामर्थ्यप्रकृतीनां किं सर्वत्र सर्वासां सम्भवस्तथार्थप्रकृति-*मन्यवस्थाभिरसह किं यथासंख्यनियमस्तथा किं स्वात्मन्यासां कर्तृक्रम* इति शङ्कात्रयमपाकर्तुमाह—एतासामिति । पञ्चकवर्गत्रयं परामृश्यते एकैकस्य

वर्गस्यैकदेशेन । तदयमर्थः । न सर्वत्र प्रारम्भादिवत् सर्वा अर्थप्रकृतयोऽपि तु यस्य नायकस्य येनार्थप्रकृतिविशेषेण प्रयोजनसम्पत्तिरधिका तदेव प्रधानमन्यत्तु भवदपि गुणभूतमसत्कल्पम् । यथा स्वपराक्रमबहुमानशालिनां पताकाप्रकर्यावविवक्षिते एव । बीजबिन्दुकार्य्याणि तु सर्वत्रानपायीनि ।

२. अर्थतादात्म्यादर्थरूपताध्यासादर्थैकज्ञाननिवेशितत्वादर्थोपरञ्जकत्वादर्थनिमित्तत्वाद्वा इतिवृत्तार्थैकयोगक्षेमत्वं वागात्मनां शब्दानामिति तदाशयेन 'वाचि यत्नस्तु कर्तव्यो नाट्यस्यैषा तनुः स्मृता' इति पूर्वमुक्तम् । इह तु शरीरमिति दर्शितमित्यविरोधः ।

३. रसाः पुनरात्मा शरीराविर्भावकाः ।

पृष्ठ ४३१.

१. एते हि सन्धयो ज्ञेया नाटकस्य प्रयोक्तृभिः ।
तथा प्रकरणस्यापि शेषाणां च निबोधत ॥
व्यायोगेहामृगौ चापि त्रिसन्धी परिकीर्तितौ ।
न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा ॥

२. अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ।
यथासंख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ॥

पृष्ठ ४३२.

१. न सर्वत्र सर्वा अर्थप्रकृतयोऽपि तु यस्य नायकस्य येनार्थप्रकृतिविशेषेण प्रयोजनसम्पत्तिः ।·········पताकाप्रकर्यावविवक्षिते ।

२. एतदुक्तम् । प्रारम्भोपयोगी यावानर्थराशिः प्रसक्तानुप्रसक्तया विचित्रास्वाद आपतितः तावान्मुखसंधिस्तदभिधायी च रूपकैकदेशः । यथा रत्नावल्यां प्रथमोऽङ्कः । तथा हि अमात्यस्य वीरो वत्सराजस्य शृङ्गारादद्भुतरशृङ्गार इति ।

पृष्ठ ४३३.

१. तदाचार्यो न सङ्गतमिति । स्याद् दृष्टतैव प्रतिमुखोपयोगिनी नष्टता त्ववमर्श एवेति, केचित् उत्तरोत्तरविकासतारतम्यं दृष्टनष्टत्वमाहुः । पूर्वावस्था हि दृष्टाप्युत्तरदृष्टविकासापेक्षया नष्टा । एवं (?) संसृष्टोपमविकास उत्तरापेक्षयेति मन्यते । अत्रापि इवार्थो न संगच्छत एव । न कार्यजननं शक्त्या (?) ।

२. लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत् ।
बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ॥

३. बीजस्योद्घाटनं यत्रेति । कार्यतया दृष्टं कारणतया नष्टमिति केचित् । उपादेये दृष्टं प्रतिनायके नष्टमित्यपरे । नचैतत्समञ्जसम् एकविषयतामन्तरेण

सन्धानायोगात्, नाशस्यापि च हेयादिविषमस्य प्रारम्भवशेन दृष्टतयैव संग्रहसम्पत्तेः (?)। तस्मादयमर्थः, बीजस्योद्घाटनं तावत्फलानुगुणो दशाविशेषस्तद्दृष्टमपि विरोधिसन्निधेर्नष्टमिव पांसुना पिहितस्येव बीजस्याङ्कुररूपमुद्घाटनम्।

पृष्ठ ४३४.

१. तस्मादयमत्रार्थः। दृष्टं नष्टमिव कृत्वा तावन्मुखे न्यस्तं भूमाविव बीजममात्येन सागरिकाचेष्टितं वसन्तोत्सवकामदेवपूजनादितिरोहितं नष्टमेव। सागरिकाचेष्टितस्य हि बीजस्येव तदाच्छादकमप्युत्सवादिरूपं भूमिरेव (रिव ?) प्रत्युद्बोधकम्, तस्य दृष्टनष्टं तुल्यं कृत्वा न्यस्तस्यात एव कुङ्कुमबीजस्य यदुद्घाटनं तत्कल्पं यत्रोद्घाटनं सर्वत्रैव कथाभागसमूहे स प्रतिमुखम्।

२. प्रतिराभिमुख्येन यतोऽत्र वृत्तिः। पराङ्मुखता हि दृष्टनष्टकल्पनादि रत्नावल्यां दर्शितम्। (कल्पनादिदर्शनम्। रत्नावल्याम् ?)

पृष्ठ ४३५.

१. उत्परयुद्घाटनदशाद्वयविशिष्टस्य बीजस्य यत्रोद्भेदः फलजननाभिमुखत्वं स गर्भः। उद्भेदमेव विवृणोति प्राप्तिरित्यादिना। प्राप्तिर्नायकविषया, अप्राप्तिः प्रतिनायकचरिते, पुनश्चान्वेषणमित्युभयसाधारणम्। अन्ये तु वीररौद्रविषय एवैतस्यार्थस्य भावादव्याप्तित्वादेतदाहुः, प्राप्तिरप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभिः पुनः पुनर्युक्तो गर्भसन्धिः। प्राप्तिसम्भवाख्यावस्थया युक्तत्वेन फलस्य गर्भभावात्।

पृष्ठ ४३६.

१. क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात्।
गर्भनिर्भिन्नबीजार्थः सोऽवमर्शोऽङ्गसङ्ग्रहः॥
अवमर्शनमवमर्शः पर्यालोचनम्, तच्च क्रोधेन वा व्यसनाद्वा विलोभेन वा। भवितव्यम् अनेनार्थेनेत्यवधारितैकान्तफलप्राप्त्यवसायात्मा गर्भसन्ध्युद्भिन्नबीजार्थसम्बन्धी विमर्शोऽवमर्शः। यथा रत्नावल्यां चतुर्थेऽङ्केऽग्निविद्रवपर्यन्तो वासवदत्ताप्रसत्त्या निरपायरत्नावलीप्राप्त्यवसायात्मा विमर्शो दर्शितः।

पृष्ठ ४३७.

१. 'सन्धीनां यानि वृत्तानी'त्यादि 'शोभामेति न संशय' इत्यन्तम्। अर्थभागराशिः सन्धिरित्युक्तम्। तत्र सन्धीनां सम्बन्धीनि यानि वृत्तानि संविधानखण्डानि। अनुपूर्वश इति, मुख्यप्रयोजनसंपादनयत्नोपनतेन क्रमेण ननु लक्षणनिरूपणप्रसङ्गपरिकल्पितेन। प्रदेशोन्वादिमध्यान्तभागेषु वर्तनेनाङ्गानि।

कुत इत्याह—स्वस्याङ्गिनः सन्धेर्या सम्पत्तिर्निष्पत्तिः, तत्र गुणवत्त्वे शेषभावे यतो युक्तान्युचितानि, सन्धिसम्पादकत्वादङ्गानीत्यर्थः ।

पृष्ठ ४३९.

१. इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् ।
अङ्गानां षड्विधं ह्येतदुक्तं शास्त्रे प्रयोजनम् ॥
इष्टस्येत्यादिना प्रयोजनमाह—अभीष्टस्य प्रयोजनस्य रसास्वादकृतो रचना विस्तारणा । वृत्तान्तस्यानुपक्षयः क्रमेण स्फुटत्वादपरसलाकाङ्क्षत्वाभावः । एतत्प्रयोजनं सर्वसाधारणम् । प्रयोगस्येतिवृत्तस्य स्वयं परस्परस्यापि रागप्राप्तिः रञ्जनायोग्यत्वलाभो व्युत्पत्त्यवस्थायोगात्, यद्वि वा पौनरुक्त्याद्याभासे गुह्याः संह्लादनीया अर्थास्तेषां संह्लादनम् ।
पुनः पुनः श्रुतमपि यदभिख्यानमितिवृत्तं तत एव नाश्चर्यकारि तदप्यङ्गप्रयोजनायामपूर्वतामिव दधदद्भुततामेति । तदाह आश्चर्यवदिति । यच्च व्युत्पत्तौ मातिशयोपयोगि तत एव प्रकाश्यं तस्य प्रकाशनं विस्तारणम् । आद्यं तु प्रयोजनम् चमत्कारकृतं स्फुतिदृष्टमपि प्रत्यक्षविशेषसिद्धमेव, न तु सन्ध्योपासनादिवददृष्टम्, नापि पूर्वरङ्गाङ्गवदुभयरूपमित्यर्थः । शास्त्र इति नाट्यात्मके वेद इत्यर्थः । एषां प्रयोजनानामङ्गलक्षणेषूदाहरणं वर्णयिष्यामः ।

पृष्ठ ४४०.

१. पुनरशब्दो विशेषद्योतकः, लक्षण एवायं क्रमो न निबन्धन इति यावत्, तेन यदुद्भटप्रभृतयोऽङ्गानां सन्धौ क्रमे च नियममाहुः तदुक्तागमविरुद्धमेव । तथाहि 'सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते' इति यन्मुखसन्धौ पञ्चमम‍ङ्गं वक्ष्यति तत्सर्वेषु सन्धिषु तावन्निबन्धनयोग्यम्, न च तथा निवेश्यमानमदृष्टकृतं विद्ध्यात्, न च लक्ष्ये न दृश्यते······यत्तु सन्धिनैयत्येनाभिधानं तत् सन्धावचश्यंभाविद्धत्स्यापनार्थम् । कानिचिदङ्गानि स्वरूपबलादेव नियमभाञ्जि यथोपक्षेपो मुखसन्धावेव प्रथमे । एवं वचनं ह्यनुपक्षिप्ते वस्तुनि किञ्चिदपि शक्यक्रियम्, यत्सूच्यते चतुःषष्ट्यङ्गसंयुक्तमिति तेन सम्भवमात्रमेषामुक्तं नतु नियमः।······यच्च प्रतिसन्ध्यभिधानं तद्बाहुल्येन तथा दर्शनात्। तथाप्युपक्षिप्तेऽर्थे विस्तारिते निश्चितगुणादभिलषिते सम्भावनीयम् उपायादिविषयं सम्प्रधारणमित्युपक्षेपपरिकरपरिन्यासविलोभनहेतुत्वाद् अन्यान्यभिधाय युक्तिरुक्ता । नतु तत्रैव सद्भावात् । आनन्तर्यनियमश्च मुनेरेवाभिमतो ( मुनेरनभिमतो ? ) लक्ष्यते ।

पृष्ठ ४४१.

१. रूप्यते प्रत्यक्षीक्रियते योऽर्थः तद्वाचकत्वात्काव्यानि रूपाणि ।

२. स्वरसमुदायत्वाविशेषेऽपि स्वराणां पर्यायतः प्राधम्यप्राधान्यात्पत्वभूयस्त्व-पूर्णत्वापूर्णत्वारोहान्त्यत्वमध्यत्वादिप्रभागभेदैः यथाऽन्यः षड्जग्रामोऽन्यो मध्यमग्रामः, तथैव वृत्तीनां स्वरस्थानीयानां प्राधम्यप्राधान्यादिना दशकेन रूपकं रूपकान्तराद्भिद्यते ।

पृष्ठ ४४२.

१. इह हि ग्रामशब्देन जातिसमुदायोऽभिधीयते । तत्र यद्यप्यंशके न्यूनस्वरताऽपि भवति, तथापि समुदायस्य पूर्णतायाः का हानिः । तस्मादयमत्रार्थः, यथा विचित्रसन्निवेशतालम्बनसुन्दरतमसम्पूर्णस्वरसमुदायरूपात् ग्रामद्वयात् निभागकल्पनया जात्यंशकानां पूर्णापूर्णादिस्वरभेदभाजां प्रसवः, एवं नाटकप्रकरणाभ्यां पूर्णवृत्तिवृत्यङ्गाभ्यां वृत्तिन्यूनानां च रूपकभेदानां परिकल्पनम् ।

पृष्ठ ४४३.

१. प्रख्याते भारतादौ यद्वस्तु तद्विषयोऽस्य । तत्रापि किञ्चिदप्रसिद्धं भवति तन्निराकरणाय प्रख्यातोदात्तेति श्रीशङ्कुकः । एतत्तु प्रख्यातवस्तु विषयोऽस्येति इयता गतार्थम् , इत्युपाध्याया इत्थमाहुः—इह त्रिविधया प्रसिद्ध्या प्रसिद्धत्वं भवति, अमुक एवंकारी अमुत्र देशे इति । तत्र प्रकर्षेण ख्यातं वस्तु तया विषयो मालवपाञ्चालादिर्देशो यस्मिन् चक्रवर्तिनोऽपि हि वत्सराजस्य कौशाम्बीव्यतिरिक्ते विषये कार्यान्तरोपक्षेपेण विना यच्चिरन्तरं निर्वर्णनं तद्वैरस्याय भवति ।

२. राजर्षिवंश्येत्यनेन प्रख्यातमपि यद्वस्तु ऋषितुल्यानां राज्ञां वंशेन साधुनोचितम् , तथा प्रख्यातत्वेऽपि देवचरितं वरप्रभावादिबहुलतया उपायोपदेशायाऽयोग्यमिति नैतदुभयं निबन्धनीयमिति फलतः प्रतिषेधो दर्शितः ।

पृष्ठ ४४४.

१. यद्यस्मान्नृपतीनां संबन्धि व्युत्पाद्यानां सामर्थ्यात् नृपतीनामेव नाटकन्नाम तच्चेष्टितं प्रह्वीभावदायकं भवति । तथा हृदयानुप्रवेशरञ्जनोल्लासनया हृदयं शरीरं चोपायव्युत्पत्तिपरिघट्टितया चेष्टया नर्तयति ।

पृष्ठ ४४५.

१. तथा हि कश्चिद्विनेयः प्रसिद्धिमनुरुध्यमानो दृष्ट इति सः प्रसिद्धेतिवृत्तके नाटके विनेयः । कश्चित्तु किमेतदपूर्वमिति प्रसिद्धे वस्तुनि रूपकान्तरमेव

तदाभासं तत्सर्वं विनेयोऽभिनववस्तुवृत्तकौतुकपरतन्त्र इति समुत्पाद्यवस्तुना प्रकरणेन विनीयते ।

पृष्ठ ४४७.

१. यद्यपि देवाः पुरुषापेक्षयोद्धताः तथापि स्वापेक्षया गाम्भीर्यप्रधानतया उदात्ता उच्यन्ते भगवत्त्रिपुरप्रभृतयः । प्रशान्ता ब्रह्मादयः, उद्धता नृसिंहादयः । अत्र यत्र तावत्येव समाप्तं व्यङ्ग इत्युक्तम् । अर्थत्रयं च कपटविद्रवशृङ्गाराः प्रत्येकं त्रिविधाः ।

पृष्ठ ४४८.

१. समवकार इत्यस्मिन् शब्देऽर्थं वाच्यम् अप्रतिसंबद्धमिति नातिसंबद्धम् किञ्चित्संबद्धं वस्त्विच्छन्ति संशब्दबलादवशब्दबलाच्च ।

२. यत्र तु द्वयोरपि न कश्चिदभिसन्धिदोषः काकतालीयेन तुल्यफलाभिसन्धानवतोरप्येकः उपचयेनापरस्त्वपचयेन युज्यते, तत्र वञ्चना सा दैवकृता वञ्चना ।

पृष्ठ ४४९.

१. नन्वेवं शृङ्गारयोगे काव्ये कथं कैशिकीहीनता ? कैशिक्यां वृत्तौ हीनानीति तत्र समासः, तेन नर्माद्यङ्गचतुष्कतदुपरञ्जकगीतनृत्यवाद्याद्यभावात् कैशिक्यां हीना ( हीनता ? ) त्र भवति । उपाध्यायास्त्वाहुः—न कामसद्भावमात्रादेव कैशिकीसंभवः, रौद्रप्रकृतीनां तदभावात् । विलासप्रधानं यद्रूपं सा कैशिकी, न च चरितम् , तद्रूपानुप्रवेशेऽपि तद्व्यवहारः प्राधान्यकृतो ह्यसाविरयुक्तम् ।

पृष्ठ ४५०.

१. ईहामृगेऽपि ते स्युः केवलममरस्त्रिया योगः ॥
यत्र तु वधेप्सितानां वधो ह्युदग्रो भवेद्धि पुरुषाणाम् ।
किञ्चिद् व्याजं कृत्वा तेषां युद्धं शमयितव्यम् ॥

पृष्ठ ४५१.

१. डिमो डिम्बो विद्रव इति पर्यायाः, तद्योगादयं डिमः ।

२. उद्देशक्रमानुसारेण तु तल्लक्षणविस्तरणम् , पुनस्तल्लक्षणपरामर्शं च गौरवमित्यभिप्रायेणार्यात्रयं पठति प्रकरणनाटकभेदादिति ।

पृष्ठ ४५२.

१. तदनन्तरञ्च दिव्यपुरुषाधिकारेण न रूपकाणि पूर्वमनेकरसयुक्तत्वेन विततेतिवृत्तत्वादयमभिधातुं युक्तः ( युक्तम् ? ) ।

२. दिव्यैः देवैः नृपैः ऋषिभिश्च नायकैः न निबद्धोऽयं भवतीत्यर्थः ।

३. उत्क्रमणीया सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचयन्त्यः स्त्रियः, ताभिरङ्कित इति तयोक्तः ।

पृष्ठ ४५३.

१. गाढदुःखाभिभूताः एवंभूतप्रयोगदर्शने सति 'दुःखी दुखाधिकान् पश्येत्' इति नीत्या प्रतनूभूतदुःखभाराः सुखेन विनेया भवन्ति ।

२. अत्र निर्वचनम् , यतः परिहासप्रधानान्याभाषणान्यत्र बाहुल्येन भवन्ति । तेन यत्रैकस्यैव कस्यचित् चरितं दुष्टत्वात् प्राधान्येन प्रहस्यते तच्छुद्धमित्यर्थः । यत्र तु वेश्यादिभिर्योगोऽत्युल्वणं च अकल्पादि तदेकद्वारेणानेकवेश्यादिचरितेन हसनीयेन सङ्कीर्णत्वात् सङ्कीर्णम् ।

३. अन्ये त्वाहुः—येषां स्वभावत एव चरितं शिष्टमध्ये सम्येतरतमत्वेन प्रहसनार्हं तदविशुद्धत्वात् सङ्कीर्णम् , तद्योगाच्च रूपकम् ।······ये तु स्वभावतो न गर्हिताः भगवत्तापसादिचेष्टाविशेषाः तेषां (?) प्राकृतपुरुषसंक्रान्तिद्वारेणयोदिताम् अन्यसम्बन्धदूष्यमाणतया प्रहसनीयतां यातास्ते स्वभावशुद्धाः, तद्योगात् रूपकं शुद्धमिति ।

पृष्ठ ४५४.

१. अन्ये तु एकाङ्कप्रकरणमध्यपातित्वादेकाङ्कमिति मन्यन्ते । प्रथमसंख्यातिक्रमे भेदाभावपरित्यागे च प्रमाणाभावात् ।

२. एकमुखेनैव भाष्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति भाणः, तत्र स प्रविष्टः पात्रविशेषः आत्मानुभूतं वा शंसति परगतं वा वर्णयति ।

पृष्ठ ४५५.

१. सकलसामान्यपृथग्गतोपदेशयोग्यस्तु लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्यत इति बाहुल्येन पृथग्जनव्युत्पत्तियोनि रूपकमिदम्, राजपुत्रादीनामपि दाम्भलीवृत्तान्तो ज्ञेय एवावञ्चनार्थमिति सम्प्रयोज्यः ।

२. सर्वरसमयत्वात् अविनतस्वभावत्वाच्च संक्षेपेण सकलव्युत्पत्तिदायित्वेन प्रधानभूतत्वात् तदङ्गनाच्च नाटकादिभाणान्तसमस्तरूपकोपजीव्यत्वात् वीथीं लक्षयति ।

३. नन्वेषामुक्तिवैचित्र्यरूपत्वं चेल्लक्षणालङ्कारादिभ्यः को भेदः ?·········तत्र केचिदुक्तलक्षणादिरितेतररूपत्वमेवैषां प्रतिपन्नाः । विवेचकास्तु तद्व्यतिरिक्तान्येवैतानीत्याहुः ।

पृष्ठ ४५६.

१. तस्याश्च सर्वरसत्त्वस्याभिधानात् पर्यायेण रसानां प्राधान्यात् उत्तमो मध्यमोऽधमो वा नायको भवत्येव ।

२. सर्वरसयोग्यतायामपि नाटके प्रकरणे च धर्मादिवीर एव प्रधानम् । परमार्थतः सर्वेषु नायकभेदेषु वीरत्वानुगमदर्शनात् । समवकारे तु यद्यपि हि शृङ्गारादित्वमुक्तं तथापि वीर एव प्रधानं रौद्रो वा, डिमव्यायोगयोरप्येवम् , ईहामृगेऽपि रौद्रप्राधान्यमेव । नाटिकायां तु शृङ्गार एव प्रधानम् । एवं तावद् वीररौद्रशृङ्गारा यथास्वं पुमर्थत्रयप्राणभूतत्वेन वर्तमानाः । एतेषु प्रयोगेषु शान्तबीभत्सरसौ तु चरमपुमर्थयोगात्तत्र सर्वस्य नाधिकारोऽपि कस्यचिदपश्चिमजन्मनोऽधिकारात् , नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयाताम् , तथापि नासौ प्रचुरप्रयोग इति तयोः पुरुषार्थप्रवरप्राणितयोरपि वीरादिरसान्तराभ्यावापेनावस्थापनम् ।

पृष्ठ ४५८.

१. तथा ह्यनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रयसम्पादनार्थम् त्रिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः ।·········उद्भटादिभिः प्रयुक्तेऽपि तस्मिन्नार्थः कश्चिदधिको हृदयपथमवतीर्ण इत्यभिप्रायेणाह—गताः श्रवणगोचरमिति ।

पृष्ठ ४५९.

१. वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः ।

२. मधुरा, प्रौढा, परुषा, ललिता, भद्रेति वृत्तयः पञ्च ।
वर्णानां नानात्वादस्येति यथार्थनामफलाः ॥

पृष्ठ ४६०.

१. तत्र केचिदाहुः—वृत्तिप्रभवत्वं दशरूपस्य सामान्यलक्षणम् , वृत्तीनां तदङ्गानां चाऽनभिनेयकाव्येष्वसम्भवात् । एतच्चासत् , आस्तां काव्यार्थः ! सर्वो हि संसारो वृत्तिचतुष्केण व्याप्त इत्युक्तं प्रथम एवाध्यायेऽस्माभिः ।

२. यद्यपि सर्वेषामभिनेयाऽनभिनेयानां काव्यानां वृत्तयश्चेष्टा मातर इव, ताभ्योऽपि वाच्यरूपत्वेन कविहृदये व्यवस्थिताभ्यः काव्यमुत्पद्यते । तथापि प्रयोगं प्रयुज्यमानत्वात् प्रयोगयोग्यत्वमभिसन्धाय वृत्तिभ्यो विनिस्सृतमभिनेयकाव्यम् प्रत्यक्षभावनायोग्यवृत्तिचतुष्टयाभिधायकत्वं दशरूपम् , सामान्यलक्षणमित्यर्थः ।

( अयं ग्रन्थः ४८० पृष्ठे समुपलभ्यते )

३. यद्यपि कायवाङ्मनसां चेष्टा एव सह वैचित्र्येण वृत्तयः, ताश्च समस्तजीवलोकव्यापिन्योऽनिर्दृष्टप्रथमताप्रवृत्ताः प्रवाहेण वहन्ति, तथापि विशिष्टेन हृदयावेशेन युक्ता वृत्तयो नाट्योपकारिण्यः । आवेशश्च तारतम्यलक्षणो द्विधा लौकिकोऽन्यश्च । तत्र लौकिक आवेशः सुखदुःखतारतम्यकृतो न रसागमान्वयी ह्यसाविरयुक्तं रसाध्याये । अलौकिकस्त्वनावेशोऽप्यावेशमयः, कवेरिव सामाजिकस्येव काव्यवसरे हृदयसंवादमरमरस्यैव यो भासते स एव साधारणः चमत्कारगोचरव्यापारविशेषो रसस्योपकरणीभवति ।

पृष्ठ ४६२.

१. अतिभार इति अक्षरसाम्यादपि निर्वचनं दर्शयन् नटव्यापारयोगेऽपि आन्तरविकल्पात्मिकाभिः वाग्भिः सङ्कल्पबाहुल्ये भारत्येव वृत्तिरिति दर्शयति ।

पृष्ठ ४६३.

१. तादृशश्च प्रथमतः कृतयुगारम्भे भगवतो वासुदेवस्यैव । तस्य हि स्वफलसिद्धये न किञ्चित्कर्तव्यमस्ति लोकानुग्रहं मुक्त्वा । यथा हि 'न मे पार्थास्ति' ( गीता ३, २२ ) इति, तेन साधारणस्य भावेन प्रविष्टानावेशोऽप्यावेशमयो भगवानेव प्रथमतो नान्यः ।

२. द्रुहिणोऽभिहतमना वाक्यमब्रवीत्—इत्यनेन प्रेक्षकत्वं ब्रह्मणः प्रदर्शयन् सामाजिकहृदये विश्रान्तिप्राधान्यं वृत्तीनामाह ।

पृष्ठ ४६४.

१. न च रसोपयोगिलालित्यभागशून्यः कोऽपि नाट्ये परिस्पन्द इत्यन्योन्यं संवलिता वृत्तयः केवलं क्वचित् किञ्चिदधिकमिति प्राधान्येन व्यपदेशः परिवर्तते ।

२. काव्यस्य क्रिया काव्यरूपतापादनं तदेव हेतुः । ततः प्रकर्षेण शिक्षा येनाभिनेयानभिनेयकाव्यवैलक्षण्यमित्यर्थः ।

३. हास्यशृङ्गारबहुला कैशिकी परिचक्षिता ।
सात्वती चापि विज्ञेया वीराद्भुतशमाश्रया ॥
रौद्रे भयानके चैव विज्ञेयाऽऽरभटी बुधैः ।
बीभत्से करुणे चैव भारती सम्प्रकीर्तिता ॥

पृष्ठ ४६५.

१. यदि वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनां काव्यालङ्कारान्तरप्रसिद्धानामुपनागरिकाद्यानां वा यदनौचित्यम् अविषये निबन्धनं तदपि रसभङ्गहेतुः ।

पृष्ठ ४६६.

१. उत्सृष्टिकाङ्के वृत्तित्रयं तावद्वचमा निषिद्धम्। भारती चात्र कथं वृत्तिः? चेष्टा हि करुणेऽप्रधानम्, तदुपकरणन्तु परिदेवितात्मिका भारती। तस्मात् फलसंवित्त्याख्या वृत्तिः, वाक्चेष्टयोः फलानुभव इति यस्या लक्षणम्, साऽभ्युपगन्तव्या। अवश्यं चैतत्, अन्यथा मूर्च्छामरणादौ वाक्चेष्टयोरभावे निर्वृत्तिकतैव स्यात्।

पृष्ठ ४६७.

१. तदत्र केचिदाहुः—सात्वत्यां यद्यपि कैशिकी शक्यान्तर्भावा तथापि रञ्जकत्वातिशयात् पृथगुपात्ता स्वरवन्मुखजाभिनयतश्च। न चान्यायवृत्तौ वृत्तित्वम्, पुमर्थचतुष्कयोगोपपत्तिविप्रतिपेधात्।

पृष्ठ ४६८.

१. यच्छकलीगर्भमतानुसारिणो मूर्च्छादावात्मसंवित्तिलक्षणां पञ्चमीं वृत्तिं सकलकार्यनिवृत्त्यनुमेयां मूर्च्छाकर्मानुभावेन च फलेनावच्छिन्नाम् आत्मव्यापाररूपां मन्यन्ते, न च परिस्पन्द एवैको व्यापारः इति मनसिकृत्य तन्मतं भावानां ग्राह्यग्रहणस्वभावत्वमुपपादयद्भिः भट्टलोल्लटप्रभृतिभिः पराकृतमिति न फलवृत्तिर्वा काचिदिति चतस्र एव वृत्तयः।

वयन्तु ब्रूमः। कोऽयमस्थानसंत्रासः। यत्किञ्चिदिह नाट्ये समस्ति तच्चेद् वृत्तिष्वन्तर्भाव्यं तदा भवेदेतत्, न चैवम्। रङ्गो हि नाम का वृत्तिः, मृदङ्गपणववंशाद्याः का वृत्तिरपि हि भवेत्। तस्माद् व्यापारः पुमर्थसाधको वृत्तिः, स च सर्वत्रैव वर्ण्यते इत्यतो वृत्तयः काव्यस्य मातृका इति। न हि किञ्चिद् व्यपारशून्यं वर्णनीयमस्ति। मदमूर्च्छादिवर्णनायामपि मनोव्यापारस्य सात्वत्याख्यस्य सम्भवात्, करुणादावपि च मनोदेहव्यापारसम्भवेऽपि बाहुल्येन वाग्व्यापारसम्भवाद् भारतीवृत्तिरुच्यते।

पृष्ठ ४६९.

१. जातिर्गतीरीतिवृत्तिच्छायामुद्रोक्तियुक्तयः।······
चतुर्विंशतिरित्युक्ताः शब्दालङ्कारजातयः। ( सरस्वतीकण्ठाभरणे )

पृष्ठ ४७०.

१. वृत्तिर्वर्तनं रसविषयो व्यापारः, काव्यस्य रसप्रवणत्वात्।
२. शब्दगतः पुनरत्र सङ्गतः सन्दर्भस्य रसप्रकाशकारणेषु प्रधानत्वात्।
३. या विकासेऽथ विक्षेपे सङ्कोचे विस्तरे तथा।
चेतसो वर्तयित्री स्यात् सा वृत्तिः साऽपि षड्विधा॥

पृष्ठ ४७१.

१. विभावाद्युपधानमहिम्ना तन्मयीभवनयोग्यं हि चेतः कदाचिद्विकसति। सत्वाविर्भावो हि विकासः। न्यग्भूतरजस्तमोगुणं हि चेतः सत्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिमासादयति। ततः सत्वभागप्रतिष्ठितः शृङ्गारस्तदाभासोऽपि तामेव भूमिकामालम्बते।······न्यग्भूतरजोगुणस्य प्रबुद्धतमसश्चेतसोऽवस्थाविशेषः ससङ्कोचः, तमालम्ब्य बीभत्सः प्रादुरास्ते तदेकभूमिश्च भयानकः।

२. व्यवहारो हि वृत्तिरित्युच्यते। तत्र रसानुगुण औचित्यवान् वाच्याश्रयो यो व्यवहारः ता एता कैशिक्याद्या वृत्तयः, वाचकाश्रयाश्चोपनागरिकाद्याः।

३. सुकुमारार्थसन्दर्भा कैशिकी तासु कथ्यते।
या तु प्रौढार्थसन्दर्भा वृत्तिरारभटी तु सा॥
कोमलप्रौढसन्दर्भा कोमलार्थाऽथ भारती।
प्रौढार्था कोमलप्रौढसन्दर्भां सात्वतीं विदुः॥
कोमले प्रौढसन्दर्भा त्वर्थे मध्यमकैशिकी।
प्रौढार्था कोमले बन्धे मध्यमारभटीष्यते॥
अर्थसौकुमार्यादिना विशेष्यमाणसन्दर्भः सुकुमारत्वादिः शब्दालङ्कारतां प्रयोजयति।

पृष्ठ ४७२.

१. वर्ततेऽनया चित्तमिति करणसाधारणोऽयं वृत्तिशब्दः इति वर्तयित्रीत्यनेन प्रयोजकव्यापारप्रधानेन दर्शितम्।

पृष्ठ ४७३.

१. मुहुरावर्तमानेषु यः स्ववर्ग्येषु वर्तते।
काव्यव्यापी स सन्दर्भो वृत्तिरित्यभिधीयते॥

२. तासु कवर्गानुप्रासवती कर्णाटी············
चवर्गानुप्रासवती कौन्तली············
द्वित्रिवर्गानुप्रासवती मास्ती··········द्वाभ्यां विदर्भितैकवर्ग्या मागधी·······
स्वान्यसंयोगिवर्ग्या ताम्रलिप्तिका··········सरूपसंयोगिप्रयितौड्री·······
भ्रमरूपसंयोगिप्रथिता पौड्री।

३. कर्णाटी कौन्तली कौड्री कौङ्कणी वाणवासिका।
द्राविडी माथुरी मात्सी मागधी ताम्रलिप्तिका॥

औण्ड्री पौण्ड्रीति विद्वद्भिः सा द्वादशविधेष्यते ।
क्वचिदस्ति क्वचिन्नास्ति क्वचिदस्ति न चास्ति च ।
वर्णानुप्रास एषा तु सर्वतोऽस्तीति भिद्यते ॥

पृष्ठ ४७४.

१. चतुर्वर्गफलसम्पन्नं चतुरोदात्तनायकम् ।
चतुर्वर्गफलं को न प्रबन्धं बान्धवीयति ॥

२. यत्रारभट्यादिगुणाः समस्ता मिश्रत्वमाश्रित्य मिथः प्रथन्ते ।
मिश्रेति तां वृत्तिमुशन्ति धीराः साधारणीमर्थचतुष्टयस्य ॥
सोऽयं पञ्चप्रकारोऽपि चेष्टाविशेषविन्यासक्रमो वृत्तिरित्याख्यायते ।

पृष्ठ ४७५.

१. शृङ्गारहास्यकरुणैर्वृत्तिः स्यात्कैशिकी रसैः ।
सात्त्वती चापि विज्ञेया वीराद्भुतशमाश्रया ॥
शृङ्गारे चैव हास्ये च वृत्तिः स्यात्कैशिकीति सा ।
सात्त्वती नाम सा ज्ञेया वीररौद्राद्भुताश्रया ॥
भयानके च बीभत्से रौद्रे चारभटी भवेत् ।
भारती चापि विज्ञेया करुणाद्भुतरूपयोः ॥
हास्यशृङ्गारकरुणैर्वृत्तिः स्यात्कैशिकी रसैः ।
सात्त्वती चापि विज्ञेया वीररौद्राद्भुताश्रया ।
भयानके सबीभत्से रौद्रे चारभटी भवेत् ।
भारती चापि विज्ञेया वीरहास्याद्भुताश्रया ॥

पृष्ठ ४७६.

१. ज्ञेयं प्रकरणञ्चैव तथा नाटकमेव च ।
सर्ववृत्तिविनिष्पन्नं नानाबन्धसमाश्रयम् ॥
वीथी समवकारश्च तथेहामृग एव च ।
उत्सृष्टिकाङ्को व्यायोगो भाणः प्रहसनं डिमः ॥
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् ।

२. डिमलक्षणन्तु भूयो लक्षणयुक्त्या प्रवक्ष्यामि ॥............
षोडशनायकबहुलः सात्त्वत्यारभटीवृत्तिसंपन्नः ।

३. ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च ।
यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव ॥

४. नानाव्याकुलचेष्टः सात्त्वत्यारभटीकैशिकीहीनः ।

कार्यः काव्यविधिज्ञैः मननं ह्युत्सृष्टिकाङ्कस्तु ॥

पृष्ठ ४७७.

१. सात्वत्यारभटीप्रायं नाट्यमाविद्धमेव तत् ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥

२. प्रवृत्तिर्देशविशेषगता वेषभाषासमाचारवैचित्र्यप्रसिद्धिरुच्यते ।

पृष्ठ ४७८.

१. तत्र दाक्षिणात्यास्तावद् बहुनृत्तगीतवाद्याः कैशिकीप्रायाश्चतुरमधुरललिताङ्गाभिनयाश्च ।

२. प्राच्येषु तु घटाटोपवाक्याडम्बरप्राधान्यो भारत्यारभटीयोगः ।

३. पाञ्चालमध्यमायान्तु सात्वत्यारभटी स्मृता

पृष्ठ ४७९.

१. वृत्तिसंश्रितैश्च प्रयोगैरभिहिता देशाः, यतः प्रवृत्तिचतुष्टयमभिनिर्वृत्तं प्रयोगश्चोत्पादितः ।

पृष्ठ ४८०.

१. अभिनयस्य द्विधा इति कर्तव्यता लोकधर्मी नाट्यधर्मी च । आद्या द्विविधा–चित्तवृत्त्यर्थकत्वेनानुभावस्य, यथा 'गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोच्छ्रितः (९–१९) इति । केवलबाह्यावयवरूपा वा, यथा पद्मकोशस्य कमपि (प्रति ?) निरूपणे ।

पृष्ठ ४८१.

१. नाट्यधर्म्यपि द्विधा—नाट्योपयोगमूलभूतकैशिकीसम्पादनोचितालौकिकशोभाहेतुः, यथा आवेष्टितादिचतुर्विधकरणरूपा ।
काचित्तदंशेन लोकमुपजीवति..........एवं जनान्तिकादौ वाच्यम् ।

पृष्ठ ४८२.

१. यथा जन्तुः स्वभावं स्वं परित्यज्यान्यदैहिकम् ।
तत्स्वभावं हि भजते देहान्तरमुपाश्रितः ॥
वेषेण वर्णकैश्चैवच्छादितः पुरुषस्तथा ।
परभावं प्रकुरुते यस्य वेषं समाश्रितः ॥

२. यथा परमात्मा स्वचैतन्यप्रकाशमत्यजन्नपि देहकञ्चुकोचितचित्तवृत्तिरूपितमिव स्वरूपमादर्शयति, तथा नटोऽपि आत्मावष्टम्भमत्यजन्नेव स्थाने लयतालाद्यनुसरणाद्योगाद् देहस्थानीयेन वर्तनादिवेषपरिवर्तनेन तदुचितस्व-

भावालिङ्गितमिव स्वात्मानं सामाजिकान् प्रति दर्शयति, प्रेक्षकपक्षे न नटाभिमानस्तत्र हि रामाभिमान इति दर्शयति।

पृष्ठ ४८३.

१. तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि॥

२. आङ्गिकस्तु भवेच्छाखा ह्यङ्कुरः सूचना भवेत्।
तस्य शाखाङ्कुरो नृत्तं प्रधानं त्रितयं मतम्।
तत्र शाखेति विख्याता विचित्रा करवर्तना॥
अङ्कुरो भूतवाक्यार्थमुपजीव्य प्रवर्तिता।
वर्तना सा भवेत्सूची भाविवाक्योपजीवनात्॥

३. एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रयाः।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः॥

४. एषा हि तनुर्नाट्यस्य सकलप्रयोगभित्तिभूतत्वेनातोद्यगीताभिनयानुग्राहकत्वात् स्वयमभिनयरूपत्वाच्च।

पृष्ठ ४८४.

१. सात्त्विके स्वभिनये नाट्यं प्रतिष्ठितम्। रसमयं हि नाट्यं रसे चान्तरङ्गः सात्त्विकस्तस्मात् स एवाभ्यर्हितः।

२. तेन वागङ्गाभिनययोर्यत्र एकत्रैवाभिनये क्रमेण युगपद्वा प्रयुज्यते (प्रयोगः ?) तत्र परं सात्त्विकस्यान्यद्वयापेक्षयाधिक्यं भवति। तत्प्रशस्यतमाऽभिनयक्रिया ज्येष्ठा भवति।.........अथ सात्त्विकोऽप्यतुल्य एव तदभिनयनं प्रशस्यं सम्पद्यते परमिति यावत्। यदि त्वितरापेक्षया सात्त्विको न्यूनस्तर्हि अभिनयक्रिया स्वरूपेणापूर्णा सम्पद्यते इत्यर्थः। सात्त्विकाभावे ह्यभिनयक्रिया नामापि नोन्मीलति।

पृष्ठ ४८५.

१. तेन समस्ताभिनयप्रयोगचित्रस्य भित्तिस्थानीयमाहार्यम्। तथा च समस्ताभिनयव्युपरमेऽपि नेपथ्यविशेषदर्शनाद्विशेषोऽवसीयते एव।
आहार्यस्य प्राधान्यादेव स्वस्य सर्वानुग्राहकत्वं सर्वोपजीव्यताख्यापनाय पश्चादभिधानम्।

२. बहुतरपुरुषसाध्यं यत्किञ्चित् तद्यथा समुद्रे सेतुबन्धनमित्यादि, तत्सर्वं प्रत्यक्षेण न दर्शनीयम्। तथा महतो जनस्य पिता पुत्रश्वश्रूस्नुषागुरुशिष्यादेः परितो

वरणं ग्रीडातङ्कादियोगेन यत्र जायते वैरस्यं वा महाजनस्य सभ्यस्य च यत्र परिवरणं चित्तसङ्कोचस्तत्सर्वं परिशुम्बनादपि न प्रयत्नप्रयोज्यम् ।

पृष्ठ ४८६.

१. इह केचिदाहुः—मरणं द्विविधम्, किञ्चिदन्यसम्बन्धिन्या क्रियया संपाद्यम्, यथा चक्रेण दैत्यशिरश्छेदः, किञ्चिदन्यसम्बन्धिक्रियानैरपेक्ष्येणैव व्याध्यभिघातादिप्रभवम्, तत्रास्यैव निषेधः क्रियते ।

त एवं प्रष्टव्याः—इदं मरणं प्रयोज्यम्, इदम् अप्रयोज्यमिति न तावदत्र विषयविभागे निदानमुत्पश्यामः । मृतस्य कथं निष्क्रमणं कथं वा अवस्थानम्, ततो नाट्योपयोगिसमस्तभुवागानादिप्रक्रियाविलोपः सामाजिकानां विरसताप्रतिपत्तिरिति तु सर्वत्र मरणं समानम्, तस्मात् रङ्गे मरणमप्रयोज्यमेव । ननु मरणानुभाववर्णनेनेदानीं किं कृत्यम् ? युद्धवीररौद्रादावप्येतदनुभाववर्णने किं प्रयोजनम् ? तदनुभावापरिज्ञाने प्रवेशकैरपि कथं वर्णनं स्यादिति चेत् मरणेऽपि समः समाधिः ।

किञ्च यत्र प्रत्यापत्तिशून्यं मरणं तत्प्रक्रियाविलोपकत्वान्न प्रयोज्यम् । यत्तु क्वचित्प्रत्यापत्तिः, यथा जीमूतवाहनस्य तदेव क्षणमात्रानिश्चितचेष्टात्मकं प्रयोज्यमेवेति सोऽपि मरणानुभावसाक्षात्करणस्य विषयः ।

पृष्ठ ४८७.

१. न वधः कर्तव्यः स्याद्योऽभ्युदयी नायकः ख्यातः ।
अपसरणमेव कार्यं ग्रहणं वा सन्धिरेव वा योज्यः ॥

पृष्ठ ४८८.

१. निश्चिता भगवन् विघ्ना नाट्यस्यास्य विनाशने ।
अस्य रक्षाविधिं सम्यगाज्ञापय सुरेश्वर ॥
ततश्च विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः ।
कुरु लक्षणसम्पन्नं नाट्यवेश्म महामते ॥

२. हयवारणयानानि विमानानि गृहाणि च ।
ततः सुरङ्गैराच्छाद्य वर्णैः सारूप्यमानयेत् ॥
अथवा यदि वस्त्राणामसान्निध्यं भवेदिह ।
साटीयैर्वा किलिञ्जैर्वा श्लक्ष्णैर्वंशक्रिया भवेत् ॥

३. अवस्तुतोऽसौ रथ्यामण्डल एव गतिक्रियां करोति तथाऽत्र सर्वं तच्चित्रं तद्रथाकृति कर्तव्यं तस्वनुगतपदमात्रमेव येन रथो यातीति प्रतीयते ।

४. तेन चित्रपटादिवियोगेऽपि रथगमनाद्यभिनयनं न युक्तम् ।

पृष्ठ ४९२.

१. अनुप्रासः समयकौ रूपकं दीपकोपमे ।
इति वाचामलङ्काराः पञ्चैवान्यैरुदाहृताः ॥

२. उपमा दीपकं चैव रूपकं यमकं तथा ।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः

३. अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म ।
सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम् ॥

४. अहृद्यमसुभि (नि) भेदं रसवत्त्वेऽप्यपेशलम् ।
काव्यं कपित्थमाम्रं च केषाञ्चित्सदृशं यथा ॥

५. स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥

६. युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ।

७. युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते ।

पृष्ठ ४९३.

१. अपुष्टार्थमवक्रोक्ति प्रसन्नमृजु कोमलम् ।
भिन्नं गेयमिवेदं तु केवलं श्रुतिपेशलम् ॥

२. तदेभिरङ्गैर्भूष्यन्ते भूषणोपवनस्रजः ।
वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते ॥

३. इति निगदितास्तास्ता वाचामलङ्कृतयो मया ।
बहुविधकृतीर्दृष्ट्वाऽन्येषां स्वयं परितर्क्य च ॥

४. काव्यालङ्कार इत्येष यथाबुद्धि विधास्यते ।

५. प्रीतिं करोति कीर्तिं च साधुकाव्यनिबन्धनम् ।

६. गिरामलङ्कारविधिः सविस्तरः स्वयं विनिश्चित्य धिया मयोदितः ।
अनेन वागर्थविदामलङ्कृता विभाति नारीव विदग्धमण्डना ॥

पृष्ठ ४९४.

१. लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये ।
काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते ॥
माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः ।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥
केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ।
यथा मन्दारकुसुमरेणुपिञ्जरितालका ॥

२. बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥

३. श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते ।

४. अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
सुखशब्दार्थसंयोगात्प्रसादः स तु कीर्त्यते ॥

५. आविद्वदङ्गनाबालप्रतीतार्थं प्रसादवत् ।

६. समासवद्भिर्बहुभिर्विचित्रैश्च पदैर्युतम् ।
सानुरागैरुदारैश्च तदोजः परिकीर्त्यते ॥

७. केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ।

पृष्ठ ४९५.

१. माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।

२. अपुष्टार्थमवक्रोक्ति प्रसन्नमृजु कोमलम् ।
भिन्नं गेयमिवेदं तु केवलं श्रुतिपेशलम् ॥

पृष्ठ ४९७.

१. दण्डिनापि 'काव्यशोभाकरान्धर्मानलङ्कारान् प्रचक्षते' इति ब्रुवता गुणमध्य एव प्रसादादीनभिदधता च गुणालङ्कारविभागोऽप्यसम्भवीति सूचितम् भवति, सत्यमेतत्, किन्तु विरचनविवेचनसामर्थ्यसमर्थनायावश्यं काल्पनिकोऽपि विभाग आश्रयणीयः ।

पृष्ठ ४९८.

१. यथा प्रासादकुड्यादिके कर्तव्ये प्रथमं भूमिः, तद्वत्काव्ये निर्मातव्ये········ भित्तिस्थानीयं लक्षणयोजनं चित्रकर्मप्रतिममलङ्कारगुणनिवेदनम् ।

२. यथा च पीवरत्वं स्तनयोर्लक्षणं मध्यस्य तु कृशत्वम्, एवं किञ्चिदभिधीयमानं केनचिद्रूपेण रसोचितेन विभावादिरूपेण तमेव पदार्थक्रमं लक्ष्यल्लक्षणम् ।

३. काव्ये तावल्लक्षणं शरीरं तस्योपमाद्यस्तयोऽर्थभागे, यथा हि पृथग्भूतेन हारेण रमणी विभूष्यते तथोपमानेन शशिना तत्सादृश्येन वा कविबुद्धिचक्रलतया परिवर्तमानस्यापृथक्सिद्धेनैव प्रकृतवर्णनीयवनितावदनादि सुन्दरीक्रियत इति तदेवालङ्कारः ।

४. एवं कविव्यापारबलात् यदर्थजातं लौकिकात्स्वभावाद् भिद्यमानं तदेव लक्षणमित्युक्तम् ।

५. अत एव काव्ये सम्यक्प्रयोज्यानीति विषयस्तेषामुक्तः ।

६. षट्त्रिंशदेतानि तु लक्षणानि
प्रोक्तानि वै भूषणसंमतानि ।
काव्येषु भावार्थगतानि तज्ज्ञैः
सम्यक् प्रयोज्यानि यथारसं तु ॥
यथारसं ये भावा विभावानुभावव्यभिचारिणस्तेषां योऽर्थस्तं स्थायिभाव-रसीकरणात्मकं प्रयोजनं गतानि प्राप्तानि, यदभिधाव्यापारोपसंक्रान्ता उद्यानादयोऽर्थास्तद्रसविशेषविभावादिभावं प्रतिपद्यन्ते तानि लक्षणानीति सामान्यलक्षणम् ।

७. षट्त्रिंशदिति च नान्यदिति वारणपरम्, कविहृदयवर्तिनामपराणामपरि-संख्येयत्वात् । किन्तु बाहुल्येन तावदियता लक्ष्यं व्याप्तम्, इयति च कवि-नाऽवधातव्यमिति संख्यानिरूपणम् ।

पृष्ठ ४९९.

१. भामहेनापि
'सैषा सर्वैव वक्रोक्तिरनयाऽर्थो विभाव्यते' इत्यादि, तेन च परमार्थे व्यापार एव लक्षणम् ।

( अथ च )

वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः ।

२. तत्र चित्तवृत्त्यात्मकं रसं लक्षयंस्तत्तद्रसोचितविभावादिवैचित्र्यसम्पादकस्त्रिवि-धोऽभिधाव्यापारो लक्षणशब्देनोच्यते ।

पृष्ठ ५००.

१. सैषा सर्वैव वक्रोक्तिरनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥

२. सादृश्याल्लक्षणा वक्रोक्तिः ।
बहूनि हि निबन्धनानि लक्षणायाम्, तत्र सादृश्याल्लक्षणा वक्रोक्तिरसौ इति ।

३. उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यं विदुर्बुधाः ।
द्वयोर्वक्त्रोस्तदिच्छन्ति बहूनामपि सङ्गमे ॥
ऋजूक्तिरथ वक्रोक्तिर्वैयत्योक्तिस्तथैव च ।
गूढं प्रश्नोत्तरोक्ती च चित्रोक्तिश्चेति तद्विदा ॥

४. वृत्तदेवादिचरितशंसि चोत्पाद्यवस्तु च ।
कलाशास्त्राश्रयञ्चेति चतुर्धा भिद्यते पुनः ॥

५. अनिबद्धं पुनर्गाथाश्लोकमात्रादि तत्पुनः

युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते ॥

पृष्ठ ५०२.

१. वैदर्भमन्यदस्तीति मन्यन्ते सुधियोऽपरे ।
तदेव च किल ज्यायः सदर्थमपि नापरम् ॥
गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।
गतानुगतिकन्यायान्नानाख्येयममेधसाम् ॥

२. अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥

३. श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।

४. मधुरं रसवद् वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥

पृष्ठ ५०४.

१. दण्डिनापि 'काव्यशोभाकरान्धर्मानलङ्कारान्प्रचक्षते' इति ब्रुवता गुणमध्य एव तत्र प्रसादादीनभिदधता च गुणालङ्कारविभागोऽप्यसम्भवीति सूचितं भवति, सत्यमेतत्, किन्तु विरचनविवेचनसामर्थ्यसमर्थनतायावश्यं काल्पनिकोऽपि विभाग आश्रयणीयः ।

२. गुणशून्यं तु न काव्यं किञ्चिदपीयति च महापुरुषो दृष्टान्तः, अहेयत्वप्रदर्शनार्थमेव हि प्रसादादीनां गुणवाचोयुक्त्या व्यवहारः, तद्विना काव्यरूपत्वाभावात् । सुन्दरास्पदं तु शरीरमुपलक्षणम् । उपमाद्यन्तरेण तु भवति काव्यमिति प्रकटीकर्तुमुपमादीनामलङ्कारत्वेन व्यवहारः ।

३. न कान्तमपि निर्भूषं विभाति वनितामुखम् ।

पृष्ठ ५०५.

१. काव्यं ग्राह्यमलङ्कारात् ।
काव्यं खलु ग्राह्यमुपादेयं भवति अलङ्कारात् ।
काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते ।

२. रीतिरात्मा काव्यस्य । ( ६ )
रीतिर्नाम इयम् आत्मा काव्यस्य, शरीरस्य इव इति वाक्यशेषः ।

पृष्ठ ५०६

१. ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः ।

२. तासां पूर्वा ग्राह्या गुणसाकल्यात्। ( १४ )
तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या गुणानां साकल्यात्।

३. न पुनरितरे स्तोकगुणत्वात्। ( १५ )
इतरे गौडीयपाञ्चाल्यौ न ग्राह्ये स्तोकगुणत्वात्।
ओजःकान्तिमती गौडीया।
ओजः कान्तिश्च विद्येते यस्यां सा ओजःकान्तिमती गौडीया नाम रीतिः।
माधुर्यसौकुमार्ययोरभावात् समासबहुला अत्युल्बणपदा च।
माधुर्यसौकुमार्योपपन्ना पाञ्चाली।
माधुर्येण सौकुमार्येण च गुणेन उपपन्ना पाञ्चाली नाम रीतिः। ओजः कान्त्यभावात् अनुल्बणपदा विच्छाया च।

४. उक्तिवैचित्र्यं माधुर्यम्। ( १० )
उक्तेर्वैचित्र्यं यत् तत् माधुर्यमिति।

५. दीप्तरसत्वं कान्तिः ३. २. १४.
दीप्ता रसाः शृङ्गारादयो यस्य स दीप्तरसः।

पृष्ठ ५०७.

१. काव्यं खलु ग्राह्यमुपादेयं भवति अलङ्कारात्।
काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्त्तते।

२. सा त्रिधा वैदर्भी गौडीया पाञ्चाली च।

३. रीतिरात्मा काव्यस्य।
रीतिर्नाम इयम् आत्मा काव्यस्य, शरीरस्येव इति वाक्यशेषः।
का पुनः इयं रीतिः? इत्याह विशिष्टा पदरचना रीतिः।
विशेषवती पदानां रचना रीतिः।

४. एतासु तिसृषु रीतिषु रेखासु इव चित्रं काव्यं प्रतिष्ठितमिति।

पृष्ठ ५०८.

१. काव्यशोभायाः कर्तारो धर्मा गुणाः।
ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति ते गुणाः, ते च ओजःप्रसादादयो न यमकोपमादयः, कैवल्येन तेषाम् अकाव्यशोभाकरत्वात्, ओजःप्रसादादीनान्तु केवलानामस्ति काव्यशोभाकरत्वमिति।
तदतिशयहेतवस्त्वलङ्काराः।
तस्याः काव्यशोभाया अतिशयस्तदतिशयस्तस्य हेतवः। तु शब्दो व्यति-

रेके । अलङ्काराश्च यमकोपमादयः ।

२. पूर्वे नित्याः ।

पूर्वे गुणा नित्याः, तैर्विना काव्यशोभानुपपत्तेः ।

३. सन्दर्भेषु दशरूपकं श्रेयः ।

सन्दर्भेषु प्रबन्धेषु दशरूपकं नाटकादि श्रेयः ।

कस्मात् ? तदाह :—

तद्धि चित्रं चित्रपटवद्विशेषसाकल्यात् ।

तद्दशरूपकं हि यस्मात् चित्रं चित्रपटवत् विशेषाणां साकल्यात् ।

ततोऽन्यभेदक्लृप्तिः ।

ततो दशरूपकादन्येषां भेदानां क्लृप्तिः कल्पनमिति । दशरूपकस्य एव हि इदं सर्वं विलसितम् । यच्च कथाऽऽख्यायिके महाकाव्यम् इति । तल्लक्षणञ्च नातीव हृदयङ्गममिति उपेक्षितमस्माभिः । तदन्यतो ग्राह्यम् ।

४. भट्टोद्भटवामनादिना भामहोक्तं 'शब्दश्छन्दोऽभिधानार्थः' इत्यभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च इति । वामनोऽपि 'सा सादृश्याल्लक्षणा वक्रोक्तिः' इति मनागस्पृष्ट इति तैस्तावद्ध्वनिदिगुन्मीलिता ।

पृष्ठ ५०९.

१. शषाभ्यां रेफसंयोगैष्टवर्गेण च योजिता ।
परुषा नाम वृत्तिः स्याद् ह्लह्याद्यैश्च संयुता ।

पृष्ठ ५१०.

१. रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् ।
स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम् ।
रसाः खलु तस्यालङ्काराः ।

पृष्ठ ५११.

२. सामवेदे गीतप्रधाने आवृत्तिस्त्वप्यर्थां नादियते ।

३. न च तानि प्रयोज्यानि हतशोभानि तानि हि ।
यान्यत्र प्रतिषिद्धानि गीतके तानि योजयेत् ।
ननु हतशोभानीति चेत्कथं प्रयोज्यानि ? इत्यत आह-यान्यत्र प्रतिषिद्धानीति ।

४. यानि वाक्यैस्तु न मूयात्तानि गीतैरुदाहरेत् ।
काव्यपातैर्वर्णयितुं कुतश्चिन्निमित्ताच्च शक्यन्ते ते गीतयाद्यैरुदाहर्तुं कथयितुं शक्याः ।

पृष्ठ ५१२.

१. तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥

२. स्वराडस्युदीची दिङ् मरुतस्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्त्तैकविंश
शस्त्वास्तोमः पृथिव्या श्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नातु
वैराज साम प्रतिष्ठित्या।

३. स्वर्यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्। स्तोमश्च
यजुश्च ऋक् च साम च बृहच्च रथन्तरं च। स्वर्देवा अगन्मामृता अभूम
प्रजापतेः प्रजा अभूम वेट् स्वाहा।

४. त्रिष्टुभः स्वार स्वारादन्तर्यामोऽन्तर्यामात्पञ्चदशः पञ्चदशाद् बृहद्……

५. यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन् सामानि यस्य लोमान्यथर्वाङ्गिरसो
मुखं स्कम्भं तं ब्रूहि कतमः स्विदेव सः।

पृष्ठ ५१३.

१. सामवेदं सहस्रेण शाखानां च विभेदतः।
२. साम्नः सहस्रशाखाः स्युः पञ्च शाखा अथर्वणः।

पृष्ठ ५१८.

२. यज्ञकर्मण्यजपन्यूङ्खसामसु।
यज्ञेति किम्। स्वाध्यायकाले त्रैस्वर्यमेव।

पृष्ठ ५२०.

१. उच्चैस्तरां वा वषट्कारः।
उदात्ततरो भवतीति फलितोऽर्थः।
२. उदात्तस्वरितपरस्य सन्नतरः।
उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात्।
३. तस्यादित उदात्तमर्धह्रस्वम्।
स्वरितस्यादितोऽर्धमुदात्तं बोध्यम्। उत्तरार्धं तु परिशेषादनुदात्तम्।
४. चतुर्थमन्द्रातिस्वार्याणां स्वराणां दृष्यन्तरमुच्चमुच्चमुदूहः। यथैतच्चतुर्थ-
मन्द्रातिस्वार्याणां स्वराणां चतुर्थस्य प्रथमो दृष्यन्तरः, मन्द्रस्य द्वितीयः,

अतिस्वार्यस्य तृतीय इति ।''''''तृतीयप्रभृतीनामुदात्ततमः कश्चित्स्वरो भवति तमुदूह इत्याचक्षते ।

पृष्ठ ५२१.

१. उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ ।
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥

२. तत्रर्ग्वेदस्यायुर्वेद उपवेदः । यजुर्वेदस्य धनुर्वेदः ।
सामवेदस्य गान्धर्ववेदः । अथर्ववेदस्य शस्त्रशास्त्राणीति शौनकोक्तचरणव्यूहः ।

३. वास्तुवेदो धनुर्वेदो गान्धर्वो दैविकस्तथा ।
आयुर्वेदश्च पञ्चैते उपवेदाः प्रकीर्तिताः ॥

४. गान्धर्ववेदः षट्त्रिंशत्सहस्रग्रन्थसंमितः ।
यत्र सप्तस्वरोत्पत्तिकथनं परिकीर्त्यते ॥

.................................

अङ्गहार प्रविक्षेपाध्यायः संक्षोभणक्रिया ।
एवमादीनि गान्धर्ववेदे सन्ति सहस्रशः॥

५. वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना ।
एवं भगवता सृष्टो ब्रह्मणा सर्ववेदिना ॥

६. अस्य योनिर्भवेद्गानमित्यादि । अस्य गान्धर्वस्य, गानमिति साम, योनिः, गीतिषु सामाख्या ।

७. गान्धर्वगानं प्रमाणमस्येति गान्धर्वमिति सामान्यतो गीतमिति कथितम् । सामानि चात्र कारणकारणानि ।

पृष्ठ ५२२.

१. गीतस्य धर्मसाधनत्वं तावद्धर्मप्रकरणे 'ब्राह्मणौ वीणागाथिनौ गायतो ब्राह्मणोऽन्यो गायेत्' इति श्रुतेः ।

२. नारदाद्यैर्यानि गीताङ्गानि सप्तरूप-प्रमाण-त्र्यस्र-चतुरस्रादि ( दीनि ? ) याश्चामी ऋग्गाथा पाणिका इह तदेव ध्रुवेति संज्ञितं नान्यत् ।''''''त्र्यस्र-समस्तादि-प्रकारवैचित्र्येण विशेषोपरञ्जनाय नियुक्तानि तद् ध्रुवेति संज्ञितम् ।

पृष्ठ ५२३.

१. अथ यो यूप आसीत् एवैष वीणायै दण्डः स एव सः । अथ या रशना आसन् यान्येवैतानि वीणाया उपवाणानि ता एव ताः । अथ यो द्रोणकलश आसीत् यैवैषा वीणायै सूना स एव सः ।

पृष्ठ ५२४

२. मान्द्रस्वरेण चरन्मन्द्रं जनयति स्वरम् ।......
कण्ठे माध्यन्दिन-युगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥

पृष्ठ ५२५.

२. अनुष्टुभं गायति वाग् वा अनुष्टुप् । ताम् अर्वाचीममिनुदन् गायति वाचोऽनवरुध्य ।
३. स्वरेण संपाद्य उद्गायेत् । एतद्वै सामस्वं यत् स्वरः । स्वेनैवैनत् तत् समृद्धयति ।
४. द्वे ह वाव सामनी स्तोभवच्चैवास्तोभवच्च ।
५. अविना त्रायमिन्द्रणाम् आ औ हो हा यि दार्वा भवस् औ हो हुं मा वा या हुं मा ।
६. तस्या एतस्यै ककुभोऽध्यर्धिरान्यक्षराणि विंशतिम् अक्षराणि गायत्र्यान् उपदधाति ।
७. तें ह वा एते सामनी हुतिश्चैव प्रतिष्ठुतिश्च ।
८. स्तोभा ह वा आसां अलङ्काराः । या अलंकुर्वतीव शोभयतीव गायेत् ।

पृष्ठ ५२६.

२. आर्चिकं निधनं न्याय्यं स्तौभिकं वा यदक्षरम् ।
दृष्टकृष्टं मन्द्रस्वार्यम् अन्तोदात्तं कृष्टस्वरम् ॥

पृष्ठ ५२७.

१. चतुर्थमन्द्रातिस्वार्याणां स्वराणां द्वयन्तरम् उत्तम् उत्तम् उद्गूहः ।

पृष्ठ ५३०.

१. वीणाद्वये स्वराः स्थाप्यास्तत्र षड्जश्चतुःश्रुतिः ।
स्थाप्यस्तन्त्र्यां तुरीयायामृषभस्त्रिश्रुतिस्ततः ॥
पञ्चमीतस्तृतीयायां गान्धारो द्विश्रुतिस्ततः ।
अष्टमीतो द्वितीयायां मध्यमोऽथ चतुःश्रुतिः ॥
दशमीतश्चतुर्थ्यां स्यात्पञ्चमोऽथ चतुःश्रुति ।
चतुर्दशीतस्तुर्यायां धैवतस्त्रिश्रुतिस्ततः ॥
अष्टादश्यास्तृतीयायां निषादो द्विश्रुतिस्ततः ।

पृष्ठ ५३१.

१. कालो मार्गः क्रियाङ्गानि ग्रहो जातिः कलालयाः ।
यतिः प्रस्तारकश्चेति तालप्राणाः दश स्मृताः ॥

पृष्ट ५३३.

१. पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् ।
जातिभिः सप्तभिर्युक्तं तन्त्रीलयसमन्वितम् ॥

२. तौ तु गान्धर्वतत्त्वज्ञौ मूर्च्छनास्थानकोविदौ ।
भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ ॥

३. अभिगीतमिदं गीतं सर्वगीतेषु कोविदौ ।
आयुष्यं पुष्टिजननं सर्वश्रुतिमनोहरम् ॥

४. ततस्तु तौ रामवचःप्रचोदिता—
वगायतां मार्गविधानसम्पदा ॥

५. भरतग्रन्थे तु संज्ञैवेति मन्तव्यम् ।
टीकाकृद्भिस्तु सदाशिवमतादिग्रन्थान्तराल्लिखितं त्रयस्त्रिंशदिमे प्रोक्ता अलङ्कारा इत्यादि·········

६. गान्धर्वमेतत्कथितं मया हि ।
पूर्वं यदुक्तं त्विह नारदेन ॥

पृष्ट ५३४.

१. या ऋचः पाणिका गाथा सप्तरूपाङ्गमेव च ।
·······································
एभ्यस्त्वङ्गेभ्य उद्धृत्य नानाछन्दः कृतानिच ।
ध्रुवाख्यं यानि गच्छन्ति तानि वक्ष्याम्यहं द्विजाः ॥
·······································
ध्रुवाश्च पञ्च विज्ञेया नानावस्थासमाश्रयाः ।

२. व्यस्तसमस्तादिप्रकारवैचित्र्येण विशेषोपरञ्जनाय नियुक्तानि तद् ध्रुवेति संज्ञितम् ।

३. ब्रह्मोक्तं सप्तरूपं हि सामवेदाद्विनिःसृतम् ।

४. गान्धर्वश्चैव वाद्यञ्च स्वातिना नारदेन च ।
विस्तारगुणसम्पन्नमुक्तं लक्षणकर्मतः ॥

५. अनुवृत्त्या तथा स्वातेरातोद्यानां समासतः ।
पौष्कराणां प्रवक्ष्यामि निर्वृत्तिं सम्भवं तथा ॥

६. पणवं दर्दुरांश्चैव सहितो विश्वकर्मणा ॥
देवानां दुन्दुभिं दृष्ट्वा चकार मुरजं ततः ।

पृष्ठ ५३५.

१. धातूंश्चैव निबोधतेति । एवकारेण चतुष्प्रहरणसत्रिप्रहरणमङ्गुलीनां विभागो द्वे वृत्ती समलेखा च त्रिलेखेत्यादिकं विशाखिलाचार्यान्तरप्रोक्तं सर्वथैव भुवागानज्ञानवैकल्योपयोगात् मया नोक्तमिति सूचयति ।

२. अस्यर्थमिष्टं देवानामित्यनेन गां वा धारयतीति गान्धर्वं गन्धर्वाणामिदमिति च यथाह विशाखिलाचार्यः । ( नवमश्लोकटीकायाम् )

३. आश्रवणेत्यादि'''''''''विशाखिलमतानुसारिणस्तु ।

४. अत एव शरीरवद् वंश्यामारोहणमवरोहणं वेति विशाखिलाचार्यः ।

५. काश्यपादिभिस्तावान्यो विनियोग उक्तः सोऽप्यत्र । अयमपि मुनिविनियुक्तोऽस्तु । परमतमप्रतिषिद्धमभिमतम् ।

पृष्ठ ५३७.

१. रागत्वं रञ्जनात्, रञ्जनं च रज्यते येन जनचित्तम् इति करणव्युत्पत्त्या वा जनचित्तानि रञ्जयतीति कर्तरि वा ।
मतङ्गेन यथा–'स्वरवर्णविशिष्टेन ध्वनिभेदेन वा जनः ।
रज्यते येन कथितः स रागः सम्मतः सताम् ॥
अथवा 'योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥

२. युक्त्यानुगृहीद् भरतादिवचनाच्च कैशिक्युत्पन्नत्वमवगम्यते ।

पृष्ठ ५३८.

१. चतुस्त्रिंशदिमे रागाः प्राक् प्रसिद्धाः प्रकीर्तिताः ।
अथाधुना प्रसिद्धानामुद्देशः प्रतिपाद्यते ॥

२. देशजानां रागाणामानन्त्यादनिबद्धत्वाच्च संख्या नास्तीति मन्तव्यम् ।

३. इति कोहलशार्दूलसंवादे संगीतमेरौ युक्तायुक्तनृत्तहस्ताश्रयचालकभेदप्रभेदलक्षणं नाम द्वितीयमाह्निकम् ।

४. भाषाणां जनकाः पञ्चदशैते याष्टिकोदिताः ।
मतङ्गः पञ्चैव ग्रामरागान् भाषाजनकत्वेनाभाषत । काश्यपस्तु द्वादशैवावोचत् । शार्दूलः पुनश्चतुर एवाभ्यधात् ।

पृष्ठ ५३९.

१. परमगुरुश्रीमदुत्पलदेवपादानां मते वर्णानां पादनिबन्धनत्वे तदाश्रितालङ्कारगीतविप्रयोग ( यो ? ) रहितकेवलस्वरालापमात्रगामिनः ।

२. यथोक्तं श्रीमदुत्पलदेवपादैः—
स्थितस्थायित्वसम्पन्नात् प्रस्तुतस्थप्रयोजनम् ।

श्रुयासु यद्यदन्येभ्यस्तद्वाग्रशोपकल्पयेत् ॥

पृष्ठ ५४०.

१. उत्पलदेवपादास्तु अस्मद्गुरवो व्याचक्षते । सन्ताय यस्मात् त्रयो भेदा गुणा इति त्रिगुणपरस्परलक्षणधर्माणः तस्मात् त्रयः स्मृताः ।

२. अतएव मतङ्गेनोक्तम्ः—

उभयोर्ग्रामयोर्मध्ये मुख्यत्वं कस्य गण्यते ।
षड्जस्यैव हि मुख्यत्वं गम्यते वचनान्मुनेः ॥

३. यथाह मतङ्गः—नन्वेते रागा ग्रामविशेषसम्बद्धा इति कुतोऽयं विशेषलाभः ? उच्यते—भरतवचनादेवासौ विशेषो लभ्यते; तथा चाह भरतमुनिः-'जाति-सम्भूतत्वाद्रागाणाम्' इति, 'यत्किञ्चिद्गीयते लोके तत्सर्वं जातिषु स्थितम्' इति वचनाच्च ।

४. पूर्वं भगवन्महेश्वराराधनाय मतङ्गमुनिप्रभृतिभिर्वेणुर्निर्मितः ( वेणुमितम् ? ) ततो वंश इति प्रसिद्धः ।

५. अंशेषु समपेत्वेतद्यथास्वनियमाद्भवेत् ।
एतदल्पनिगारवाहुः कम्बलाश्वतरादयः ॥
अल्पद्विश्रुतिके रागभाषादावपि तन्मतम्
अल्पनिषादगान्धारे रागभाषादावपि स्वरसाधारणं प्रयोक्तव्यमिति तेषां कम्बलाश्वतरादीनां मतम् ।

६. तथा चाहाञ्जनेयः—
येषां श्रुतिस्वरग्रामजात्यादिनियमो नहि ।
नानादेशगतिच्छाया देशीरागास्तु ते स्मृताः ॥

पृष्ठ ५४१.

१. सदाशिवः शिवा ब्रह्मा भरतः काश्यपो मुनिः ।
मतङ्गो याष्टिको दुर्गा शक्तिः शार्दूलकोहलौ ॥
विशाखिलो दन्तिलश्च कम्बलो ऽश्वतरस्तथा ।
वायुर्विश्वावसू रम्भाऽर्जुननारदतुम्बुराः ॥
आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ।
स्वातिर्गुणो बिन्दुराजः क्षेत्रराजश्च राहलः ॥
रुद्रटो नान्यभूपालो भोजभूवल्लभस्तथा ।
परमर्दी च सोमेशो जगदेकमहीपतिः ॥
व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः ।

भट्टाभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः ॥

पृष्ठ ५४३.

१. अस्मद्विरचितेऽध्यात्मविवेके वीक्षयतां बुधैः ।

पृष्ठ ५४४.

२. कुडुक्कतालस्तु गोपालनायकेन रागकदम्बे रेवगुप्तवदप्रयुक्तः ।

पृष्ठ ५४५.

२. यथा कन्दर्पसम्भवे ममैव
उभे तदानीमुभयोस्तु चित्ते कदुष्णनिःश्वासचरिष्णुकेन ।
एकीकरिष्यन्ननुरागशिल्पी रागोष्मणैव द्रवतामनैषीत् ॥

पृष्ठ ५४६.

१. प्रागल्भ्यं दधते न लक्षणविदः संगीतलक्ष्यं विना
लक्ष्यज्ञा अपि शास्त्रबोधविधुरा गोष्ठीष्वपष्टोक्तयः ।
संलक्ष्यस्फुटलक्ष्यलक्षणविदः श्रीसिंहपृथ्वीभुजो
नायं नूतन इत्यनूनधिषणैर्ग्रन्थोऽवमान्यो बुधैः ॥
२. दुर्बोधं भरतादिभिर्विरचितं शास्त्रं चिराभ्यासतः
संगीतागमसारविद्भिरखिलैः सार्धं विचार्य स्फुटम् ॥
३. एतां राजपथीकर्तुं यतते सिंहभूपतिः ।
४. पुरीह विद्यानगरी चकास्ति तुङ्गा वराङ्गैरभितः पवित्रा ।
एतां शास्ति..............................
प्रौढः श्रीदेवराजो विजयनृपसुतो यादवानां वरेण्यः ।
विश्वम्भराभाग्यकृतावतारस्तस्यास्ति पुत्रो यशसा पवित्रः ।
संगीतसाहित्यकलास्वभिज्ञः प्रतापवानिम्मडिदेव एषः ॥
सुधर्मेव सभा यस्य समुल्लासिकलाधरा ।
गान्धर्वगुणगम्भीरा विद्याधरविनोदिनी ॥
...................................
तस्यामस्ति प्रशस्तश्रुतिगणचतुरः कल्लिनाथार्यवर्यः ॥
तुत्तालेश्वरदेवो हि यस्य साक्षात्पितामहः ।
असौ किं वर्ण्यते ज्ञानवैराग्यैश्वर्यसंपदा ॥
माता नारायणी यस्य पिता लक्ष्मीधरः स्वयम् ।
शाण्डिल्यगोत्रजः सोऽयं साक्षात्संगीतदेवता ॥
तमाह कल्लिनाथार्यं स राजा बहुमानतः ।

रत्नाकरं व्याकुरुध्व लक्ष्यलक्षणकोविदः ॥

पृष्ठ ५४७.

1. शाके नेत्रधराधराब्धिधरणीगण्येऽथ साधारणे
वर्षे श्रावणमासि निर्मलतरे पक्षे दशम्यां तिथौ ॥
रामामात्यविनिर्मितः स्वरवतैर्निर्मथ्य रत्नाकरं
मोऽयं मेलकलानिधिर्मतिमतामाकल्पमाकल्पताम ॥

पृष्ठ ५४८.

1. यद्वा लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वते ।
तस्माल्लक्ष्यविरुद्धं यत्तच्छास्त्रं नेयमन्यथा ॥

पृष्ठ ५४९.

1. शुद्धेभ्यस्तत्र भेदस्तु सप्तानामेव लक्षितः ।

पृष्ठ ५५२.

1. ईदृक् तदासवर्य्यः क्षितितलपतिभूर्नैव जातो न भावी
सोऽयं विश्वाधिनाथः सरिगमपधनीलापसंलापनाढ्यः ॥
श्रुत्योरेवं श्रुतीनां गणमणिलपितः सप्तधीर्ग्रामकूटे ।
जूटे तानात्मकेऽसौ स इह विजयते रागरूपो नृपेन्द्रः ॥
तदाज्ञयाऽहं करवाणि सेतुं संगीतसिन्धोर्मजमापयैव ।
२ श्रीगुरुचरणसरोजे ध्यात्वा सेतूपरिस्थोऽपि ।
गङ्गारामेतिसंज्ञः कुर्वे रामेशप्रीत्याऽहम् ॥
माथुरकुलमणिजन्मा जिज्ञासूनां विनोदाय ।
तद्बसङ्गीतशमतमनुकलयन् सुबोधाय ॥

पृष्ठ ५५४.

२. अयं द्वितीयः पक्षोऽत्र मेलाः पञ्चदश स्मृताः ।
तेषाः पञ्चदशस्वेषु पञ्च लीनास्तदुच्यते ॥
३. तेषु साङ्गीतिकैरत्रावचसङ्गीतकोविदैः ।
ये वक्ष्यविष्यमाणाश्च कल्प्यमानाश्च कल्पिताः ॥
अस्मदादिभिरज्ञाता ये च शार्ङ्गकगोचराः ।
ये च देशीयरागास्तद्ग्रामसामान्यमेलकाः ॥
येन पन्तुवरावयात्य-कल्याणिप्रमुखा अपि ।
नानादेशीयरागास्तद्ग्रामसामान्यमेलकान् ॥
सङ्गृहीतुं समुद्युक्ता एते मेला द्विसप्ततिः ।

४. अस्माभिर्दर्शिता इत्थं लक्ष्यलक्षणसङ्गताः ।
एकोनविंशतिर्मलाः सम्प्रति प्रचरन्ति ये ॥

५. न हि तान्यत्र शक्यन्ते दूषणानि त्वयेरिते
ग्रन्थे गणयितुं दोषसहस्रग्रथने मया ॥

पृष्ठ ५५७.

१. ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ।

२. तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः ।

३. पृथिव्यबोषधिपुरुषवाग्ऋक्सामाद्रां सतानां रसानां रसतमोऽष्टम उद्गीथावयव ओङ्कारः परमः परमात्मप्रापकत्वात् परस्य ब्रह्मणोऽर्धं स्थानं तदर्हतीति परार्ध्य इत्यर्थः ।

पृष्ठ ५५८.

१. तत्रापि च निमित्ताख्ये नोपादाने कथञ्चन ।
निमित्तकारणानाञ्च कदाचित्कापि सम्भवः ॥

पृष्ठ ५५९.

१. तत्र स्वपकर्षादुपाधेस्तदाकारत्वम्,
चित्तत्त्वस्य तु निजैश्वर्यात् ।

२. स्वस्मिन्नभेदाद्भिन्नस्य दर्शनक्षमतैव या ।
अत्यक्तस्वप्रकाशस्य नैर्मल्यं तद् गुरूदितम् ॥
नैर्मल्यं मुख्यमेकस्य संविन्नाथस्य सर्वतः ।
अंशांशिकातः क्वाप्यन्यद्विमलं तत् तदिच्छया ॥

३. अत एव पुरोवर्तिन्यालोके स्मरणादिना ।
निमित्तेन घनेनास्तु संक्रान्तदयिताकृतिः ॥
अन्यथा संविदारूढा कान्ता विच्छेदयोगिनी ।
कस्माद्भाति न वै संविद्विच्छेदं पुरतो गता ॥

४. अत एवान्तरं किञ्चिद्धीसंज्ञं भवतु स्फुटम् ।
यत्रास्य विच्छिदा भानं सङ्कल्पस्वप्नदर्शने ॥

५. यस्त्वाह नेत्रतेजांसि स्वच्छात्प्रतिफलन्त्यलम् ।
विपर्यस्य स्वकं वक्त्रं गृह्णन्तीति स पृच्छ्यते ॥

पृष्ठ ५६०.

१. प्रतिबिम्बनमर्हति
शब्दो नभसि सानन्दे स्पर्शधामनि सुन्दरः ।

स्पर्शोऽन्योऽपि दृढाघातशूलकुन्तादिकोद्भवः ॥
परस्थः प्रतिबिम्बत्वात्स्वदेहोद्धूननाकरः ।

२. न तु स्मृतान्मानसगोचरादृता भवेत्क्रिया सा किल वर्तमानतः ।
अतः स्थितः स्पर्शवरस्तदिन्द्रिये समागतः सन्निदितस्तथाक्रियः ॥
असम्भवे बाह्यगतस्य तादृशः स एव तस्मिन्प्रतिबिम्बितस्तथा ।
करोति तां स्पर्शवरः सुखात्मिकां स चापि कस्यामपि नाडिसन्ततौ ॥

पृष्ठ ५६२.

१. तथाहि मधुरे गीते स्पर्शे वा चन्दनादिके ॥
माध्यस्थ्यविगमे याऽसौ हृदये स्पन्दमानता ।
आनन्दशक्तिः सैवोक्ता यतः सहृदयो जनः ॥

२. शब्दोऽपि मधुरो यस्माद्वीर्योपचयकारकः ।
तद्धि वीर्यं परं शुद्धं विसिसृक्षात्मकं मतम् ॥
एवं यदि एषां परब्रह्मरूपत्वं न स्यात् तत्तदवहितचेतसां कथं नाम तद्विकासो भवेदिति भावः ।

३. गीतादिविषयास्वादासमसौख्यैकतात्मनः ।
योगिनस्तन्मयत्वेन मनोरूढेस्तदात्मता ॥

४. येषां न तन्मयीभूतिस्ते देहादिनिमज्जनम् ।
अविदन्तो मग्नसंविन्मानास्त्वहृदया इति ॥

पृष्ठ ५६३.

१. इह हि विश्वस्य वाच्यवाचकात्मना द्विधा अवभासः ।
तत्र प्रकाश एव प्राधान्येन वाच्यात्मकविश्वरूपत्वेन परिस्फुरति इति विश्वचित्प्रतिबिम्बत्वोट्टङ्कनेनोक्तम् । विमर्शोऽपि तत्तदनुत्तरानन्दाद्यामर्शात्मनोदेति ।

२. चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।

३. अत्रानुत्तरशक्तिः सा स्वं वपुः प्रकटस्थितम् ।
कुर्वत्यपि ज्ञेयकलाकालुष्याद्बिन्दुरूपिणी ॥

४. न केवलं परामर्शनीयविश्ववैचित्र्यात्मना परिस्फुरतोऽस्य न स्वस्वरूपात्प्रच्यावो यावत्तत्तत्परामर्शात्मनापि······इह योऽसौ बिन्दुः स तत्तत्परामर्शात्मतामुल्लिलासयिषुर्नादात्मकः शब्दः······नदति सर्वेषां जीवकलात्वेन स्फुरतीति नादः ।

पृष्ठ ५६४.

१. सैव हि परमेश्वरी स्वस्वातन्त्र्याद्बहीरूपतामुल्लिलासयिषुर्वाच्यवाचकक्रमानु-

दयाद्विभागस्यास्फुटत्वाच्चिज्ज्योतिष एव प्राधान्याद् द्रष्टृरूपतया पश्यन्तीति शब्दव्यपदेश्या । तदनु वाच्यवाचकक्रमस्य आसूत्रितविभागत्वेऽपि स्फुटास्फुटरूपत्वेन बुद्धिमात्रनिष्ठतया दर्शनप्राधान्यात् द्रष्टृदृश्ययोरन्तरालवर्तित्वेन मध्यमाशब्दवाच्या । ततोऽपि स्थानकरणप्रयत्नवलात्तत्तद्वर्णक्रमोपग्रहाद्विभागस्य स्फुटत्वात् दृश्यस्यैव प्राधान्याद् विखरे शरीरे भवत्वाद्वैखरीशब्दाभिधेया ।

२. तत्र या स्वरसन्दर्भसुभगा नादरूपिणी ।
सा स्थूला खलु पश्यन्ती वर्णाद्यप्रविभागतः ॥
३. अविभागैकरूपत्वं माधुर्यं शक्तिरुच्यते ।
स्थानवाय्वादिघर्षोत्था स्फुटैव च भारती ॥

पृष्ठ ५६५.

१. परावाक्पर्यायस्य ब्रह्मशक्तेर्नादस्य ब्रह्मणोत्यन्तप्रत्यासन्नत्वात्तदुपासनायां कृतायां ब्रह्मप्राप्तिर्मणिप्रभाप्रवृत्तस्य मणिलाभवद्भवेदिति ।
२. यत्तु चर्मावनद्धादि किञ्चित्तत्रैव यो ध्वनिः ।
स स्फुटास्फुटरूपत्वान्मध्यमा स्थूलरूपिणी ॥

पृष्ठ ५६६.

१. अस्मिन्स्थूलत्रये यत्तदनुसन्धानमादिवत् ।
पृथक्-पृथक् तत्त्रितयं सूक्ष्ममित्यभिशब्द्यते ॥
२. या तु स्फुटानां वर्णानामुत्पत्तौ कारणं भवेत् ।
सा स्थूला वैखरी यस्याः कार्यं वाक्यादि भूयसा ॥

पृष्ठ ५६७.

१. मत्स्येन्द्रपीठं जठरप्रदीप्तिं प्रचण्डरुग्मण्डलखण्डनास्त्रम् ।
अभ्यासतः कुण्डलिनीप्रबोधं चन्द्रस्थिरत्वञ्च ददाति पुंसाम् ॥

पृष्ठ ५६९.

१. अनाहते दले पूर्वेऽष्टमे चैकादशे तथा ।
द्वादशेऽवस्थितो जीवो गीतादेः सिद्धिमृच्छति ॥
चतुर्थषष्ठदशमैर्दलैर्गीतादि नश्यति ।
विशुद्धेरष्टमादीनि दलान्यष्टौ श्रितानि तु ॥
दद्युर्गीतादिमंसिद्धिं षोडशं तद्विनाशकम् ।
दशमैकादशे पत्रे ललनायां सुसिद्धिदे ॥

नाशकं प्रथमं तुर्यं पञ्चमं च दलं विदुः ।
ब्रह्मरन्ध्रस्थितो जीवः सुधया संप्लुतो यदा ॥
तुष्टो गीतादिकार्याणि सम्यकर्माणि कारयेत् ।

२. श्रीआदिनाथेन सपादकोटिलयप्रकारा कथिता जयन्ति ।
नादानुसन्धानकमेकमेव मन्यामहे मुख्यतमं लयानाम् ॥

पृष्ठ ५७०.

१. तदुक्तमीश्वरोक्ते राजयोगे–
प्राणापानौ नादबिन्दू जीवात्मपरमात्मनोः ।
मिलित्वा घटते यस्मात्तस्मात्स घट उच्यते ॥

२. अपुनर्वासनोत्थानात् पुनर्वासनोत्थानाभावात्, विषयविस्मृतिर्विषयाणां शब्दादीनां ध्येयाकारस्य विषयस्य वा विस्मृतिर्लयो लयशब्दार्थः ।

३. उन्मन्यवाप्तये शीघ्रं भ्रूध्यानं संमतं मम ।
राजयोगपदं प्राप्तुं सुखोपायोऽल्पमेधसाम् ।
सद्यः प्रत्ययसंधायी जायते नादजो लयः ॥

पृष्ठ ५७१.

१. ध्यानमेकाग्रचित्तैकसाध्यं न सुकरं नृणाम् ।
तस्मादत्र सुखोपायं श्रीमन्नादमनाहतम् ॥
गुरूपदिष्टमार्गेण मुनयः समुपासते ।
सोऽपि रक्तिविहीनत्वान्न मनोरञ्जको नृणाम् ॥
तस्मादाहतनादस्य श्रुत्यादिद्वारतोऽखिलम् ।
गेयं वितन्वतो लोकरञ्जनं भवभञ्जनम् ॥

२. नादो हि स्फोटात्मना समस्तपदार्थप्रकाशकत्वसाधर्म्येण चैतन्यारोपविषयत्वाच्चैतन्यम् ।

पृष्ठ ५७२.

१. पश्यन्ती मध्यमा वैखरी चेति त्रिविधैव वाक् । त्रिविधापि सा स्थूला सूक्ष्मा परा चेति भेदत्रयेण भिद्यते इति वाचो नव भेदाः सम्पद्यन्ते । वर्णादीनां प्रविभागरहिता स्वरप्रधाना संगीतरूपा वाक् स्थूला पश्यन्ती, जिगासारूपा सैव सूक्ष्मा पश्यन्ती, जिगासादीना संविद्रूपा परा पश्यन्ती । एवं चर्मावनद्धे मृदङ्गादौ करघातादिना समुन्नता ध्वनिरूपा वाक् स्थूला मध्यमा । विवादयिषारूपा सैव सूक्ष्मा मध्यमा, नादोच्चाररहिता निरुपाधिका सैव परा मध्यमा ।

पृष्ठ ५७४.

१. ततोऽपरिपक्वप्राणिकर्मभिः कालवशात्प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽवुद्धिपूर्विका सृष्टिः मायापुरुषौ प्रादुर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो विन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य विन्दोरचिदंशो बीजम्, चिदचिन्मिश्रोंऽशो नादः, चिदंशो विन्दुरिति। अविच्छब्देन शब्दार्थोभयसंस्काररूपा अविद्योच्यते।

२. अस्माद्विन्दोः शब्दब्रह्मापरनामधेयं वर्णादिप्रविभागरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते।

३. सोऽयं प्राणिमात्रस्य हृद्देशस्थोऽर्धमात्रारूपस्तुरीयोंऽशोऽर्धमात्रारूपो नादः स्फोटो वेत्युच्यते।

४. तत्र मध्यमायां यो नादांशः तस्यैव स्फोटात्मनो वाचकत्वेनाप्तिः।

पृष्ठ ५७९.

१. गृहं चैत्रमारामः सेतुबन्धस्तटाकमाधारो वा वास्तुः।

पृष्ठ ५९०.

१. यथा नृत्ते तथा चित्रे त्रैलोक्यानुकृतिः स्मृता ॥
दृष्टयश्च तथा भावा अङ्गोपाङ्गानि सर्वशः।
कराश्च ये महानृत्ते पूर्वोक्ता नृपसत्तम ॥
त एव नृत्ते विज्ञेया नृत्तं चित्रं परं मतम्।

पृष्ठ ६०५.

१. अथ प्रपञ्च्यतेऽस्माभिर्विन्यासश्चित्रकर्मणः।
चित्रं हि सर्वशिल्पानां मुखं लोकस्य च प्रियम् ॥
पट्टे पटे वा कुड्ये वा यथा चित्रस्य संभवः।

पृष्ठ ६१०.

१. अद्भुतो नाम विस्मयस्थायिभावात्मकः। स च दिव्यजनदर्शनेप्सितमनोरथावाप्ति—उपवनदेवकुलादिगमनसभाविमानमायेन्द्रजालसंभावनादिभिर्विभावैरुत्पद्यते।

२. गृहमेकं विलासार्थमाश्चर्यस्य परं पदम्।
रतेरावासभवनं विस्मयस्यैकमास्पदम् ॥




# INDEX

## W

